E

कविकुलगुरु कालिदास संस्कृत विश्वविद्यालय, रामटेक
हस्तलिखित संग्रह

दाखल क्र M391 विषय वैदिक.

नांव श्रावणी प्रयोग.

लेखक/लिपीकार ?.

पृष्ठ 74.

काल — पूर्ण/~~अपूर्ण~~.

श्रीगणेशाय नमः ॥ ॥ अथ श्रावणीप्रयोगः ॥ ॥ कृष्णमूर्तिपदद्वंद्वं निधाय हृदि मंगलम् ॥ स्फुटं स्नानप्रयोगोयं यथामति वितन्यते ॥ १ ॥ तत्रोत्सर्गकालो निर्णीयते ॥ अत्र गृह्यसूत्रम् ॥ पौषस्य रोहिण्यां मध्यमाया वाष्टकायामध्यायानुत्सृजेयुरुदकांतं गत्वा ॥ इति । सूत्रार्थश्च । पौषमासस्य रोहिणीनक्षत्रयुक्ते ॥ अथ मध्यमाष्टकायां पौष्यूर्ध्वाष्टम्यामध्यायानुत्सृजेयुराचार्यशिष्या उत्सृष्टानां छंदसां पुनरुपाकरणं यावत्तावन्नपठेयुरित्यर्थः । इति । अत्रकालांतरमप्युक्तंगृह्यकारेण ॥ तथाचसूत्रम् ॥ अर्धषष्ठान्मासानधीत्योत्सृजेयुरर्धसप्तमान्वा ॥ इति सूत्रार्थः । अर्धषष्ठमासान् अर्धःषष्ठोमासोयेषुतेऽर्धषष्ठास्तान् ॥ सार्धपञ्चमानिति यावत् ॥ श्रावण्यामुपाकृतानिच्छंदांसिमाघकृष्णामावास्यापर्यंतमधीत्योत्सृजेयुः । अर्धसप्तमान्वाअर्धः सप्तमोमासोयेषुतेऽर्धसप्तमास्तानर्धसप्तमान्सार्धषण्मासानिति

यावत् । फाल्गुनकृष्णामावास्यापर्यंतमधीत्योत्सृजेयुरित्यर्थः । तथाचसूत्रार्थ कारिका । पौषमासस्यरोहिण्यांकृष्णाष्टम्यामथापिवा ॥ उदकान्तंसमासाद्य वेदस्यो त्सर्जनंबहिः॥इति ।दर्शान्ताभिप्रायेण पौष कृष्णाष्टम्याम् । पौर्णमास्यन्ताभिप्रायेण माघकृष्णाष्टम्यामित्यर्थः ॥ वेदस्येति ॥ वेदशब्देन मंत्रब्राह्मणयोरेवोत्सर्गः । नाङ्गा नाम् । छन्दोवत्सूत्राणीत्यादिना भेदावगमात् ॥ अत्र सूत्रोक्तकाले उत्सर्गाख्यं कर्म कर्तुमशक्तश्चेत्स्मृत्युक्तकालेऽपिकुर्वीत । तत्रमनुः । पुष्येतु छन्दसां कुर्याद्बहि रुत्सर्जनं द्विजः ॥ माघशुक्लस्यवाप्राप्ते पूर्वाण्हेप्रथमेऽहनि ॥ कात्यायनः ॥ उत्सर्ग श्चतदातिष्येकुर्यात्प्रौष्ठपदेऽथवा ॥ तथा खादिरगृह्ये विशेषः ॥ पुष्येतूत्सर्जनं कु- र्याद्रुपाकर्मदिनेऽथवा ॥ इति ॥ पुष्ये पुष्यमासे इतिमदनरत्नकारेण व्याख्यातम् । उपाकर्मकालस्तु सूत्रकारेणोक्तः ॥ अथातोऽध्यायोपाकर्मौषधीनां प्रादुर्भावे श्रव-

णेन श्रावण्यां पौर्णमास्यांश्रावणस्य पञ्चमींहस्तेनवा ॥ इति ॥ सूत्राथश्चप्रयोगे
स्फुटीभविष्यति ॥ क्वचिन्निषेधोऽप्युक्तः । संक्रांतौग्रहणे चैव सूतके मृतकेऽपिवा ॥
गणस्नानं नकुर्वीत नारदस्य वचोयथा ॥ गणस्नानशब्देनोत्सर्गाख्यंकर्म ॥ अतएव
स्मृत्यर्थसारे उक्तम् ॥ कस्मिंश्चिद्दिनेग्रहणसंक्रान्तिवर्जिते कार्यं कर्मणोनलोपः नो-
त्कर्षइति । इत्थमुत्सर्गकालं निर्णीय यथाविधिप्रयोगंकुर्वीत ॥ स्नातव्यंविधिवत्तत्रे
त्युक्तत्वाद्यथाविधिस्नानप्रयोगोनिरूप्यते ॥ ॥ तत्रायंप्रकारः॥ अयंनित्यस्नानस्य
कालापकर्षणविधिः नतुकर्माङ्गत्वेन विधानम् ॥ ततश्चतस्मिन्दिने प्रातरान्हिकं
माध्यान्हिकंस्नानं प्रातरेव कर्तव्यम् । नमध्यान्हे दैवकर्मत्वात् ॥ प्रथमंसाशिष्य
आचार्यः प्रथमप्रयोगे गणपतिपूजनपूर्वकं मातृकार्चनमाभ्युदयिकश्राद्धं यथोक्तं
कुर्वीत ॥॥ श्राद्धं गुरोरेव ॥ तथाचेरेणुकदीक्षितः । पौषमासस्य रोहिण्यां कृष्णा

ष्टम्यामथापिवा ॥ माघस्याद्यतिथौतत्रपूर्वाह्णेफाल्गुनस्यवा ॥ उत्सर्गंविधिवत्कुर्या
ज्जलान्तेछन्दसांबहिः ॥ नागानांमातृपूजादिश्राद्धंकृत्वागुरोः सह ॥ इति ॥ शुद्धेवास-
सीपरिधायकृतकुशोपग्रहः कृतप्राणायामोदक्षिणपाणिनागृहितकुसुमयवकुङ्कुमो
देशकालौसंकीर्त्यसंकल्पंकुर्यात् ॥ ॥ तद्यथा ॥ ॥ अधीतानामध्यापितानांचाध्या
यानांस्थापनविच्छेदक्रोशघोषणदन्तविघ्रातिदुर्वृत्तद्भुतोच्चारितवर्णानां पूर्वसवर्णा
नांगलोपलम्बितविवृत्तोच्चारितवर्णानां श्लिष्टास्पष्टवर्णविघट्टनादिभिः पठितानां
श्रुतीनां यद्यातयामत्वं तत्परिहारार्थम् अष्टत्रिंशदनध्यायाध्ययनेरथ्यासंचर
तः शूद्रस्यशृण्वतोऽध्ययने म्लेच्छान्त्यजादेःशृण्वतोऽध्ययने अशुचिदेशेऽध्य
यने आत्मनोऽशुचित्वेऽध्ययने अक्षरस्वरानुस्वारपदच्छेदकण्डिकाव्यञ्जनोरस्य
कण्ठ्यतालव्यमूर्धन्यदन्त्यौष्ठ्यनासिक्य कण्ठ्यनासिक्य तालव्यनासिक्य मूर्धन्य

नासिक्य दन्त्यनासिक्यौष्ठ्यनासिक्य कण्ठ्यतालव्य कण्ठ्यौष्ठदन्त्योष्ठ्यरेफजिह्वा
मूलीयोपध्मानीयोदात्तानुदात्तस्वरितह्रस्वदीर्घप्लुतचर्द्विर्भावपरसवर्णादीनां व्य
त्ययेनोच्चारेमाधुर्याक्षरव्यक्तिहीनत्वाद्यनेकप्रत्यवायपरिहारपूर्वकं सर्वस्यवेदस्यस
वीर्यत्वसंपादनद्वारायथावत्फलप्राप्त्यर्थंश्रीपरमेश्वरप्रीत्यर्थं सशिष्योऽहमुत्सर्जनाख्यं
कर्मकरिष्ये ॥ तदङ्गत्वेनगणपतिपूजनमातृकापूजनाभ्युदयिकश्राद्धानिकरिष्ये
॥ तत्सर्वंगणपत्यादिपूजनंयथोक्तविधिनासंपादयेत् ॥ ततःस्नानतर्पणपूजोपकरणा
निमृदमार्द्रगोमयंभस्मकुशांस्तिलाक्षतान्सुरभीणिपुष्पाणि दूर्वाङ्कुरापामार्गयज्ञो
पवीतगन्धधूपदीपदक्षिणानैवेद्यफलताम्बूल नारिकेलपूगीफल पञ्चामृतपञ्चगव्यपी
तश्वेतवस्त्रकुङ्कुमहरिद्रारक्तचूर्णानिसमित्सक्तुघृतदर्वीतर्पणपात्रादीनिगृहीत्वा ग्रामा
त्प्रागुदग्वादिशिशिष्यैरन्यैश्चब्राह्मणैःसहनद्यादिरम्यंजलाशयंप्रतिगच्छेत् ॥ देव

खातालाभेचतुरःपिण्डानुद्धृत्यपारक्येऽपिजलाशयेस्नानमाचरेदित्यपिबोद्धव्यम् ॥
ततस्तीरंप्रक्षाल्यशुभांमृदमार्द्रंगोमयंकुशांस्तिलानक्षतान्सुरभीणिपुष्पाणिदुर्वापामा
र्गंमृषिस्थापनार्थंपीठमृषिपूजनार्थंगंधधूपघृतदीपनानाविधनैवेद्यवर्षोद्भवफलं पूगी
फलयज्ञोपवीतानिपृथक्पृथक्स्थापयेत् ॥ अथसर्वैःसहस्मार्ताचमनंकुर्यात् ॥ तद्य
था ॥ सामान्यमृदापाणिपादानुलेपनम् ॥ ततःप्रक्षालितपाणिपादःसपवित्रकरो
बद्धत्रिकच्छाशिखोधृतवामस्कंधब्रह्मसूत्रस्ततःस्थलेचैकैकं पादंकृत्वोपाविश्यबाहू
जान्वंतराकृत्वामुक्तांगुष्ठकनिष्ठिकेनदक्षिणहस्तेन फेनबुद्बुदवर्जंस्वच्छंमाषमज्जन
परिमितं जलमादायांगुष्ठमूलस्थब्राह्मणतीर्थेनशब्दमकुर्वंस्त्रिःप्रपिबेत् ॥ ततोऽगुष्ठ ३
मूलेनमुखंद्विःप्रमृज्यांगुष्ठमूलंप्रक्षाल्यखानिसंस्पृशेत् ॥ तद्यथा ॥ तर्जनीमध्यमा
नामिकाभिरास्यम्। अंगुष्ठतर्जनीभ्यांनासारंध्रद्वयम्। अनामिकांगुष्ठाभ्यांचक्षुषी। ता

भ्यामेवश्रोत्रे । अंगुष्ठकनिष्ठिकाभ्यांनाभिम् । पाणितलेनहृदयम् । संकुचितकराग्रेण स्कंधद्वयम् । एवमेवशीर्षम् ॥ एवंस्मार्ताचमनंविधायप्राणायामंकृत्वाहेमाद्रिसंकल्पं कुर्वीत ॥ देशकालौसंकीर्त्य ॥ उत्सर्गाख्येकर्मणिस्नानविधिनास्नानंकुर्वे ॥ अत्रप्रणव पूर्वकामंत्राःपठनीयाः ॥ तदुक्तंदाल्भ्यपरिशिष्टे । ब्रह्मयज्ञोजपोहोमोदेवर्षिपितृक कर्मच ॥ अनोंकृत्यकृतंसर्वंनभवेत्सिद्धिकारकम् ॥ ॥ इति ॥ ततोगुरुःशिष्यैःसह उभाकवीत्युच्चैःपठेत ॥ ॐउभाकवीयुवायोधर्मःपरापतत् ॥ परिसख्ययस्यधर्मि णोविसख्यानिविसृजामहे ॥ इतिमंत्रंपठित्वायथाज्येष्ठक्रमेणसर्वेगुरोरभिवादनं कुर्युः । पुनश्चदेशकालौसंकीर्त्यसंकल्पंकुर्वीत ॥ यथा ॥ अध्यायोत्सर्गोपाकर्मानि मित्तंगणस्नानमहंकरिष्ये ॥ इतिसंकल्प्यस्नानानुज्ञांप्रार्थयेत ॥ नमोस्तु वासुदे वायशितिकंठायवेधसे ॥ रुद्रायचापहस्तायदंडिनेचक्रिणेनमः ॥ सरस्वतीचगाय

त्रीवेदमातागरीयमी ॥ सन्निधात्रीभवत्वंचसर्वपापप्रणाशिनी ॥ त्वंराजासर्वतीर्था
नांत्वमेवजगतःपिता ॥ याचितंतीर्थमेदेहिसर्वपापप्रणाशनः ॥ यद्दासागरानिर्घोषद
ण्डहस्तासुरांतक ॥ जगत्स्रष्टर्जगन्मित्रनमामित्वांसुरांतक ॥ तीक्ष्णदंष्ट्रमहाकायक
ल्पांतदहनोपम ॥ भैरवायनमस्तुभ्यमननुज्ञांदातुमर्हसि ॥ आपस्त्वमसिदेवेशज्यो
तिषांपतिरेवच ॥ पापंनाशयमेदेववाङ्मनः कायकर्मजम् ॥ इतिस्नानानुज्ञांप्रार्थ्यज
लाभिमंत्रणंकुर्यात ॥ तद्यथा ॥ उरुंहीत्यस्यशुनःशेपऋषिर्वरुणोदेवतात्रिष्ट
प्छंदः जलाभिमंत्रणेविनियोगः ॥ ॐउरुंहिराजाव्वरुणश्चकार सूर्यायपंथाम-
न्वेतवाउ ॥ अपदेपादाप्रतिंधातवेकरुतापवक्ताहृदयाविधंश्चित् ॥ न-
मोवरुणायाभिष्ठितोवरुणस्यपाशः ॥ इतिमंत्रेणतोयमभिमंत्रयेत ॥ अ

थजलावर्तनम् ॥ येतेशतमितिमंत्रस्यवामदेवऋषिर्वरुणसवितृविष्णुविश्वमरुत्स्वर्का
देवताःत्रिष्टुप्छंदःतोयावर्तनेविनियोगः ॥ ॐयेतेशतंवरुणयेसहस्रंयज्ञियाःपाशावि
ततामहांतः ॥ तेभिर्नोअद्यसवितोत्तविष्णुर्विश्वेमुंचंतुमरुतःस्वर्काः ॥ इतिमंत्रेणजलं
दक्षिणहस्तेनात्रिवारंदक्षिणावर्तमालोडयेत ॥ ततःसुमित्रियेत्यनेनपूर्वांजलिनापोगृ
हीत्वादुर्मित्रियेत्यनेनयस्यांदिशिद्वेष्टास्तितस्यांदिशिद्वेष्टारंमनसाविचिंत्य तटेंऽज
लिंप्रक्षिपेत् ॥ द्वेष्टुरभावेकामादीन्स्मृत्वांजलिंप्रक्षिपेत् ॥ सुमित्रियानइतिमंत्रस्यप्र
जापतिर्ऋषिरापोदेवतायजुश्छंदःजलग्रहणेविनियोगः ॥ ॐ सुमित्रियानआपऽओ
षंधयःसंतु ॥ दुर्मित्रियानइत्यस्यप्रजापतिर्ऋषिरापोदेवतायजुश्छंदःअंजलिप्रक्षेप
विनियोगः ॥ ॐ दुर्मित्रियास्तस्मैसंतुयोऽस्मान्द्वेष्टियंचवयंद्विष्मः ॥ अभिचार

केऽपःस्पृशेत ॥ अथमृत्तिकास्नानम् ॥ तस्यास्त्रीन्भागान्कृत्वाप्रथमभागंवामह
स्तेनगृहीत्वातेननाभेरधउभयकटिप्रदेशावनुलेपयेत् ॥ हस्तंप्रक्षाल्यपुनस्तेनैवह
स्तेनाद्वितीयभागेनमृत्तिकांवामहस्तेनगृहीत्वादक्षिणहस्तेनाच्छाद्याभिमंत्रयेत ॥
तत्रमंत्रः ॥ ॐ अश्वक्रांतेरथक्रांतेविष्णुक्रांतेवसुंधरे ॥ उद्धृतासिवराहेणकृष्णेनश
तबाहुना ॥ मृत्तिकेब्रह्मपूतासिकश्यपेनाभिवंदिता ॥ मृत्तिकेहरमेपापंयन्मयादु
ष्कृतंकृतम् ॥ त्वयाहतेनपापेनसर्वपापैःप्रमुच्यते ॥ इत्यभिमंत्र्य ॥ तयैव । ब
स्तिऊरूजंघेचरणौकरौचमृदाप्रत्येकंतूष्णींत्रिस्त्रिरनुलिप्य पुनर्हस्तौप्रक्षाल्याचम्य
तीर्थोदकायनमइतिकायावाङ्मनोभिस्तीर्थोदकंनमस्कुर्यात्॥ ततस्तृतीयभागेनमृ
दाइदंविष्णुरितिमंत्रेणदक्षिणपाणिगृहीतयामृदाललाटादिनाभिपर्यंतानि गात्राण्यनु
लिपेत ॥ वामहस्तस्थयानाभेरधःपादपर्यंतानिइदंविष्णुरितिमेधातिथिर्ऋषिर्वि

ष्णुर्देवतागायत्रीच्छंदः अनुलेपनेविनियोगः ॥ ॐइदंव्विष्णुर्व्विचक्रमेत्रेधानिदं
धेपदम् ॥ समूढमस्यपांसुरेस्वाहा ॥ स्मार्तकर्मणिकंडिकांतोमंत्रः सर्वत्र ॥
तथाच रेणुः ॥ गृह्यकर्मसुयेमंत्रा ज्ञेयाः स्वाध्यायपाठतः ॥ किंचमध्यमावृत्या
स्तेनद्रुतानविलंबिताः इति ॥ तडागादिषुतोयेषुप्रत्यर्कंस्नानमाचरेत ॥ इति । नद्या
दौतुप्रवाहाभिमुखोवास्नानमाचरेत ॥ तथाचनृसिंहपुराणे ॥ नद्यांसरःसुचस्नाया
त्प्रतिस्रोतःस्थितोद्विजः ॥ यायाःसमुद्रगानद्यस्तासुस्नानंतुसंमुखम् ॥ सर्वेऽपि
शाखिनःकुर्युर्विनावाजसनेयिनाम् ॥ इतिविशेषवाक्यान्महानद्यांसूर्याभिमुखंस्न
नंयुक्तंवाजसनेयिनाम ॥ ततःनाभिमात्रंतीर्थजलंप्रविश्यसूर्याभिमुखःस्थित्वाआ
पोअस्मानित्यादिदेवीरित्यंतेननिमज्जेत् ॥ आपोअस्मानितिमंत्रस्यप्रजापतिर्ऋ

षिरापोदेवताअत्युष्टिच्छंदः मज्जनोन्मज्जनेविनियोगः ॥ ॥ ॐआपाअस्मोन्मा
तरः शुंधयंतुघृतेननोघृतप्वः पुनंतु ॥ विश्वꣳहिरिप्रम्प्रवहंतिदेवी ॥ ततउ
दिदाभ्यइत्यादिपूतएमीत्यंतेनोन्मज्जेत् ॥ ॐउदिदाभ्यꣳशुचिरापूतएमि ॥
॥ पुनस्तूष्णींनिमज्ज्योन्मज्ज्याचामेत् ॥ अथगोमयस्नानम् ॥ गोमयमादा
य ॥ अग्रमग्रंचरंतीनामोषधीनांवनेवने ॥ तासामृषभपत्नीनांपवित्रंकायशोधनम् ॥
तन्मेरोगांश्चशोकांश्चनुदगोमयसर्वदा ॥ इतिमंत्रेणगोमयमभिमंत्र्य ॥ मानस्तो
कइतिमंत्रस्य कुत्सऋषिःरुद्रोदेवता जगतीच्छंदः ॥ अंगानुलेपनेविनि ६
योगः ॥ मानस्तोकेतनयेमानआयुंषिमानोगोषुमानोअश्वेषुरीरिषः ॥ मा

नोवीरान्रुद्रभामिनोवधीर्हविष्मंन्तᳫंसदमित्वाहवामहे ॥ इतिमंत्रेणसोदकंगोमयं
सूर्यायदर्शयित्वातेनत्रिवारंपूर्वमृल्लेपनवल्ललाटादिपादतलपर्यंतान्यंगान्यनुलिप्य
प्रक्षालयेत् ॥ अथभस्मस्नानम्॥भस्मादाय ॥ अग्निरितिभस्मजलमितिभस्मस्थल
मितिभस्मव्योमेतिभस्मसर्वᳫंहवाइदंभस्ममनएतानिचक्षूँषिभस्मानीति ॥ ॐप्रस
द्यभस्मनायोनिमपश्चंपृथिवीमग्न ॥ सᳫंसृज्यंमातृभिष्ट्वंज्योतिष्मान्पुनरासदः ॥
इतिमंत्रेणललाटाद्यंगेषुभस्मलेपनंकृत्वाभस्मलिप्तएववक्ष्यमाणैरष्टभिर्मंत्रैःप्रतिमंत्रं
कुंभमुद्रयाद्दक्षिणचुलुकेनवाशिरोभिषिंचेत् ॥ दक्षांगुष्ठंपरांगुष्ठेक्षिप्त्वाहस्तद्वयेनतु ॥
सावकाशामेकमुष्टिंकुर्यात्साकुंभमुद्रिका ॥ इति ॥ मंत्रायथा ॥ ॥ इमंमेवरुणेति
मंत्रस्यशुनःशेपऋषिर्वरुणोदेवतागायत्रीच्छंदःअभिषेकेविनियोगः ॥ ॐइमंमेवं

रुणश्रुधीहवंमद्याचमृडय ॥ त्वामवस्युराचके ॥ तत्वायामीतिमंत्रस्यशुनःशेपऋषि
र्वरुणोदेवतात्रिष्टुप्छंदःअभिषेकेविनियोगः ॥ ॐतत्वायामिब्रह्मणावंदमानस्तदा
शांस्तेयजमानोहविर्भिः ॥ अहेडमानोवरुणेहबोध्यरुशꣳसमानआयुःप्रमोषीः ॥
त्वंनइतिमंत्रस्यवामदेवऋषिःअग्नीवरुणौदेवतेत्रिष्टुप्छंदः अभिषेकेविनियोगः ॥
ॐ त्वंनोअग्नेवरुणस्यविद्वान्देवस्यहेडोअवयासिसीष्ठाः ॥ यजिष्ठोवन्हितमःशोशु
चानोविश्वाद्वेषांꣳसिप्रमुमुग्ध्यस्मत ॥ सत्वंनइतिमंत्रस्यवामदेवऋषिः अग्नीवरुणौ
देवतेत्रिष्टुप्छंदः अभिषेकेविनियोगः ॥ ॐसत्वंनोअग्नेऽवमोभवोतीनेदिष्ठोअस्याउ
षसोव्युष्टौ ॥ अवयक्ष्वनोवरुणꣳरराणोवीहिमृडीकꣳसुहवोनएधि ॥ मापइतिमंत्र

स्यप्रजापतिर्ऋषिः हृदयशूलंदेवतायजुश्छंदःअभिषेकेविनियोगः ॥ ॐमापोमौषं
धीर्हिंक्ष्सीर्धाम्नोधाम्नोराजंस्ततोवरुणनोमुञ्च ॥ यदाहुरघ्न्याइतिवरुणेतिशपामहे
ततोवरुणनोमुञ्च ॥ उदुत्तममितिमंत्रस्यशुनःशेपऋषिर्वरुणोदेवतात्रिष्टुप्छंदः अभि
षेकेविनियोगः ॥ ॐउदुत्तमंवरुणपाशमस्मदवाधमंविमंध्यम७श्रंथाय ॥ अथा
वतमादित्यव्रतेतवानागसोअदितयेस्याम ॥ मुंचंत्वितिमंत्रस्यआथर्वणोभिषग्वं
धुर्ऋषिरोषधयोदेवताअनुष्टुप्छंदः अभिषेकेविनियोगः ॥ ॐमुंचंतुमाशपथ्यादथो
वरुण्याद्दुत ॥ अथोयमस्यपड्वीशात्सर्वस्माद्देवकिल्बिषात ॥ अवभृथेत्यस्यप्रजा
पतिर्ऋषिर्यज्ञोदेवताअनुष्टुप्छंदः अभिषेकेविनियोगः ॥ ॐअवभृथनिचुंपुणनिचेरु

 रांसिनिचुंपुणः ॥ ऽअवंदेवैर्देवकृतेमनोयाभिषमवमर्त्यैमर्त्यकृतंपुरुराव्णोदेवरिषस्पा 
 हि ॥ इति ॥ ततस्तूष्णींनिमज्ज्याचामेत् ॥ अथदर्भमार्जनम् ॥ ततःवक्ष्य
माणैरोंकारादिभिर्मंत्रैःप्रतिमंत्रंकुशत्रयेणसजलेननाभिदक्षिणपार्श्वमारभ्यपाणिंशि
रउपरिनीत्वानाभिवामपार्श्वपर्यंतंप्रदक्षिणमात्मानंपावयेत् ॥ मंत्रायथा ॥ ॐ कार
स्यपरब्रह्मऋषिः परमात्मादेवतागायत्रीच्छंदःपावनेविनियोगः ॥ ॐपुनातु ॥ इमं-
मेइतिमंत्रेण ॥ सप्तव्याहृतीनांविश्वामित्रजमदग्निभरद्वाजगौतमात्रिवसिष्ठकश्यपा
ऋषयः अग्निवायुसूर्यबृहस्पतिवरुणेंद्रविश्वेदेवादेवताःगायत्र्युष्णिगनुष्टुब्जगतीत्रि
ष्टुप्पंक्तिबृहतीछंदांसिपावनेविनियोगः ॥ ॐभूःपुनातु ॥ तत्वायामि॰इतिमंत्रेण ॥ 
ॐभुवःपुनातु ॥ त्वंनोअग्ने॰ इतिमंत्रेण ॥ ॐस्वःपुनातु ॥ सत्वंनोअग्ने॰ इति

मंत्रेण ॥ ॐमहःपुनातु ॥ मापोमौषधी० इतिमंत्रेण ॥ ॐजनःपुनातु ॥ उदुत्तमं०
इतिमंत्रेण ॥ ॐतपःपुनातु ॥ मुंचंतुमा०इतिमंत्रेण ॥ ॐसत्यंपुनातु ॥ अवभृथ० इ
तिमंत्रेण ॥ तत्सवितुरितिमंत्रस्यविश्वामित्रऋषिःसवितादेवतागायत्रीच्छंदःपावने
विनियोगः॥ॐतत्सवितुर्वरेण्यंभर्गोदेवस्यधीमहि ॥ धियोयोनःप्रचोदयात् ॥ ॐस
र्वंपुनातु ॥ आपोहिष्ठेतितिसृणांसिंधुद्वीपऋषिरापोदेवतागायत्रीच्छंदःपावनेविनि
योगः ॥ ॐआपोहिष्ठामयोभुवस्तानऊर्जेदधातन ॥ महेरणायचक्षसे ॥ योवःशि
वतमोरसस्तस्यभाजयतेहनः ॥ उशतीरिवमातरः ॥ तस्माअरंगमामवोयस्यक्ष
यायजिन्वथ ॥ आपोजनयथाचनः ॥ पुनातु ॥ इदमित्यस्यप्रजापतिर्ऋषिरापोदे
वतामहापंक्तिश्छंदःपावनेविनियोगः ॥ ॐइदमापःप्रवहतावद्यंचमलंचयत् ॥ यच्चा

भिद्रुद्रोहानृतंयच्चशेपेअभीरुणम् ॥ आपोमातस्मादेनसःपवमानश्चमुंचतु ॥ पुना
तु ॥ हविष्मतीरितिमंत्रस्यप्रजापतिर्ऋषिर्लिंगोक्तादेवताअनुष्टुप्छंदःपावनेविनियो
गः ॥ ॐहविष्मतीरिमाआपोहविष्माँ२आविवासति ॥ हविष्मान्देवोअध्वरोह
विष्माँ २ अस्तुसूर्य्यः ॥ पुनातु ॥ देवीरापइतिमंत्रस्यप्रजापतिर्ऋषिरापोदेवतापं
क्तिश्छंदःपावनेविनियोगः ॥ ॐदेवीरापोअपान्नपाद्योवऊर्मिर्हविष्यइंद्रियावान्म
दिन्तमः ॥ तंदेवेभ्योदेवत्रादत्तशुक्रपेभ्योयेषांभागस्थस्वाहा ॥ पुनातु ॥ कार्षि
रसीत्यादीनांत्रयाणांमंत्राणांप्रजापतिर्ऋषिः । कार्षिरसीत्यक्षरचतुष्टयस्याज्यंदेव
तासमुद्रस्यसमायइत्यस्यचापोदेवतात्रयाणामनुष्टुप्छंदः पावनेविनियोगः ॥ ॐका
र्षिरसिसमुद्रस्यत्वाक्षित्याउन्नयामि ॥ समापोअद्भिरग्मतसमोषधीभिरोषधीःपुना

तु॥अपोदेवाइतिमंत्रस्यवरुणऋषिरापोदेवतात्रिष्टुप्छंदःपावनेविनियोगः॥ ॐअपोदे
वामधुमतीरगृभ्णन्नूर्जस्वतीराजस्वश्चितानाः॥याभिर्मित्रावरुणावभ्यषिंचन्याभि
रिंद्रमनयन्नत्यरातीः॥ पुनातु ॥ द्रुपदादिवेतिमंत्रस्यप्रजापत्यश्विसरस्वत्यऋषयः
आपोदेवताअनुष्टुप्छंदः पावनेविनियोगः॥ ॐद्रुपदादिवमुमुचानःस्विन्नःस्नातोम
लादिव॥ पूतंपवित्रेणेवाज्यमापःशुधंतुमैनसः॥ पुनातु॥ शंनोदेवीतिमंत्रस्यसिंधु
द्वीपऋषिःगायत्रीच्छंदःआपोदेवतापावनेविनियोगः॥ ॐशन्नोदेवीरभिष्टयआपो
भवंतुपीतये॥शंय्योरभिस्रवंतुनः॥पुनातु ॥ अपाछंरसमितिमंत्रस्यबृहस्पतिऋ
षीरसोदेवताअनुष्टुप्छंदःपावनेविनियोगः ॥ ॐअपाछंरसमुद्वयसछंसूर्य्येसंतछंस

यजुः माहितम ॥ अपाꣳसंरसस्ययोरसस्तंवोगृह्णाम्युत्तममुपयामगृहीतोऽसींद्रायत्वाजुष्टंगृ श्रा॰प्र॰

१० ह्णाम्येषतेयोनिरिंद्रायत्वाजुष्टंतमम् ॥ पुनातु ॥ अपोदेवीरितिमंत्रस्यसिंधुद्वीपऋषि

रापोदेवतान्यंकुसारिणीबृहतीच्छंदःपावनेविनियोगः ॥ ॐअपोदेवीरुपसृजमधुमत

रियक्ष्मायप्रजाभ्यः॥तासामास्थानादुज्जिहतामोषधयःसुपिप्पलाः॥पुनातु ॥ पुनंतु

मेत्यस्यप्रजापतिर्ऋषिःपितरोदेवताअनुष्टुप्छंदःपावनेविनियोगः ॥ ॐपुनंतुमापितरः

सोम्यासःपुनंतुमापितामहाःपुनंतुप्रपितामहाः॥पवित्रेणशतायुषा ॥पुनातु॥ पुनंतु

मेत्यस्यप्रजापतिऋषिःपितरोदेवताअनुष्टुप्छंदःपावनेविनियोगः॥ ॐपुनंतुमापिता १०

महाःपुनंतुप्रपितामहाः॥ पवित्रेणशतायुषाविश्वमायुर्व्यश्नवै ॥ पुनातु ॥ अग्नइतिमंत्र

स्यवैश्वानरऋषिरग्निर्देवताअनुष्टुप्छंदःपावनेविनियोगः ॥ ॐअग्नआयूंषिपवस
आसुवोर्जमिषंचनः ॥ आरेबाधस्वदुच्छुनाम् ॥ पुनातु ॥ पुनंतुमेतिमंत्रस्यप्रजाप
तिर्ऋषिर्लिंगोक्तादेवताअनुष्टुप्छंदःपावनेविनियोगः ॥ ॐपुनंतुमादेवजनाःपुनंतुम
नसाधियः ॥ पुनंतुविश्वाभूतानिजातवेदःपुनीहिमां ॥ पुनातु ॥ पवित्रेणपुनीहि
मेतिमंत्रस्यप्रजापतिर्ऋषिरग्निर्देवतागायत्रीच्छंदःपावनेविनियोगः॥ॐपवित्रेणपुनी
हिमाशुक्रेणदेवदीद्यत् ॥ अग्नेक्रत्वाक्रतूँ१रनु ॥ यत्तइतिमंत्रस्यप्रजापतिर्ऋषिरग्निर्दे
वतातृतीयपादस्यब्रह्मादेवतागायत्रीच्छंदःपावनेविनियोगः ॥ ॐयत्तेपवित्रमर्चि
ष्यग्नेविततमंतरा ॥ ब्रह्मतेनपुनातुमा॥पुनातु ॥ पवमानइतिमंत्रस्यप्रजापतिर्ऋषिः

सोमोदेवतागायत्रीच्छंदः पावनेविनियोगः ॥ ॐपवमानः॑सोअद्यनः॑पवित्रे॑णवि

 चर्षणिः॑ ॥ यः॑पोतासपुंनातुमा ॥ पुनातु ॥ उभाभ्यांदेवेतिमंत्रस्यप्रजापतिर्ऋ

षिःसवितादेवतागायत्रीच्छंदः पावनेविनियोगः ॥ ॐ उभाभ्यांदेवसवितः॑पवित्रे

णसवेनंच ॥ मांपुनीहिविश्वतः॑ ॥ पुनातु ॥ वैश्वदेवीपुनतीतिमंत्रस्यप्रजापतिर्ऋ

षिर्विश्वेदेवादेवतास्त्रिष्टुप्छंदःपावनेविनियोगः ॥ ॐवैश्वदेवीपुनतीदेव्यागाद्यस्यांमि

माबह्वस्तन्वोवीतपृष्ठाः॑॥ तयामदंत सधमादेषुवयं॑स्यामपतयोरयीणाम्॥पुनातु॥

इतिमन्त्रैर्दर्भैर्मार्जयित्वोदकंस्पृशेत् ॥ अग्निष्टोमकर्माणिदीक्षितकर्तृकपावनवत्पाव 

नमंत्रकुशपवित्रैश्चित्पतिर्मेतिपावयतीतिसूत्रदर्शनात् ॥ चित्पतिर्मेतित्रयाणांप्रजाप

तिर्ऋषिः चित्पतिर्मावाक्पतिर्मेत्युभयोः प्रजापतिर्देवतादेवोमेत्यस्यसवितादेवतायजु

श्छंदः पावनेविनियोगः ॥ ॐचित्पतिर्मापुनात्वच्छिद्रेणपवित्रेणसूर्य्यस्यरश्मिभिः ॥ तस्यंतेपवित्रपतेपवित्रंपूतस्ययत्कामःपुनेतच्छकेयम् ॥ पुनातु ॥ एवंनाभेरूर्ध्वंपावयित्वावाक्पतिर्मेत्यारभ्यतच्छकेयमित्यंतेननाभेर्मध्यंपावयेत् ॥ ॐवाक्पतिर्मापुनात्वच्छिद्रेणपवित्रेणसूर्य्यस्यरश्मिभिः ॥ तस्यंतेपवित्रपतेपवित्रपूतस्ययत्कामःपुनेतच्छकेयम् ॥ पुनातु ॥ इत्यनेनमध्यम् ॥ देवोमेत्यारभ्यतच्छकेयमित्यंतेननाभेरधःपावयेत् ॥ ॐदेवोमांसवितापुनात्वच्छिद्रेणपवित्रेणसूर्य्यस्यरश्मिभिः ॥ तस्यंतेपवित्रपतेपवित्रंपूतस्ययत्कामः पुनेतच्छकेयम् ॥ पुनातु ॥ पुनःसमुच्चयेनसर्वांगंपावयेत् ॥ ततःपूर्वोक्तप्रकारेण ॥ ॐपुनातु ॥ ॐभूः पुनातु ॥ ॐभुवःपुनातु ॥ ॐस्वःपुनातु ॥ ॐम

हः पुनातु ॥ ॐ जनः पुनातु ॥ ॐ तपः पुनातु ॥ ॐ सत्यं पुनातु ॥ ॐ तत्सवितुर्वरेण्यं
भर्गो० पुनातु ॥ इमं मे० तत्त्वायामि ब्रह्मणा० त्वं नः० स त्वं नः० मापो मौषधीर्हिंसीर्धा
म्नो धाम्नो राजंस्ततो वरुण नो मुंच ॥ यदाहुरघ्न्या इति वरुणेति शपामहे ततो वरुण नो
मुंच ॥ उदुत्तमं वरुण पाशमस्मदवाधमं विमध्यमं श्रथाय ॥ अथा वयमादित्य व्रते तवा
नागसो अदितये स्याम ॥ मुंचंतु मा शपथ्यादथो वरुण्यादुत ॥ अथो यमस्य पड्वीशात्
सर्वस्माद्देवकिल्बिषात् ॥ अवभृथ निचुंपुण निचेरुरसि निचुंपुणः ॥ अव देवैर्देवकृतमे
नो यासिषमव मर्त्यैर्मर्त्यकृतं पुरुराव्णो देव रिषस्पाहि ॥ अथापामार्गमार्जनम् ॥ तत



अपाघमित्यनेनापामार्गैस्त्रिभिर्मार्जयेत् ॥ अपाघमित्यस्य शुनःशेप ऋषिर्लिंगोक्ता देव

ताअनुष्टुप्छंदः अपामार्जनेविनियोगः ॥ ॐअपाघमपकिल्बिषमपकृत्यामपोरपः ॥अपांमार्गत्वमस्मदपदुष्वंन्यःसुव ॥पुनातु ॥ ततःकांडात्कांडादितिमंत्रेणदूर्वांकुरैस्तिसृभिमार्जयेत् ॥ कांडात्कांडादितिमंत्रस्याग्निर्ऋषिर्दूर्वेष्टकादेवताअनुष्टुप्छंदः मार्जनेविनियोगः॥ ॐकांडात्कांडात्प्ररोहंतीपरुषःपरुषस्परि ॥ एवानोदूर्वेप्रतनु सहस्रेणशतेनच ॥ अथाघमर्षणम् ॥ ततोंऽतर्जलेमग्नोऽनुच्छ्वसन्नघमर्षयेत ॥ ऋतंच सत्यंचेत्यस्याघमर्षणऋषिःभाववृत्तंदैवतंअनुष्टुप्छंदः अघमर्षणेविनियोगः ॐऋतंचसत्यंचाभीद्धातपसोऽध्यजायत ॥ ततोरात्र्यजायततततःसमुद्रोअर्णवः ॥ समुद्रादर्णवादाधिसंवत्सरोअजायत ॥ अहोरात्राणिविदधद्विश्वस्यमिषतोवशी ॥ ॥ सूर्याचंद्रमसौधातायथापूर्वमकल्पयत् ॥ दिवंचपृथिवींचांतरिजमथोस्वः ॥ इतित्रिरावर्तये

त्॥ॐद्रुपदादिवमुमुचानःस्विन्नःस्नातोमलादिव॥पूतंपवित्रेणेवाज्यमापः शुंधंतुमै
नंस ॥ इतित्रिःपठेत् ॥ आयंगोरित्येतेषांत्रयाणांमंत्राणांप्रजापतिर्ऋषिराग्निःपराव
ररूपोदेवतागायत्रीच्छंदःअघमर्षणेविनियोगः ॥ ॐआयंगौःपृश्निरक्रमीदसंदन्मा
तरंपुरः ॥ पितरंचप्रयन्त्स्व ॥ इतिऋचंत्रिरावर्तयेत ॥ सशिरसंप्राणायामंवात्रिः
पठेत ॥ ॐभूःॐभुवःॐस्वःॐमहःॐजनःॐतपःॐसत्यंॐतत्सवितुर्वरेण्यंभर्गो
देवस्यधीमहि ॥ धियोयोनः प्रचोदयात् ॥ आपोज्योतीरसोऽमृतंब्रह्मभूर्भुवःस्वरो
म् ॥ इतिचत्रिःपठेत् ॥ ततःपरमात्मानंशेषशायिनंसायुधंसश्रीकंचतुर्भुजंविष्णुंध्या
येत् ॥ ततःस्नानांगतर्पणम् ॥ अत्रार्थेविष्णुः ॥ स्नातश्चार्द्रवासादेवर्षिपितृतर्पणमं
भःस्थएवकुर्वीतेति ॥ पराशरोऽपि॥ नित्यंनैमित्तिकंकाम्यंत्रिविधंस्नानमुच्यते तर्प

णंतुभवेत्तस्यतदंगत्वेनकीर्तितम् ॥ बाहुपूर्णांतिलैःकृत्वाजलस्थस्तर्पयेत्पितॄन् ॥ स्थल स्थेननकर्तव्यं पितॄणांतृप्तिमिच्छता ॥ रोमस्थैस्तिलैर्नतर्पयेदितितुब्रह्मयज्ञोत्तरतर्पण एव ॥ ॐब्रह्मादयोदेवास्तृप्यंताम् ॥ ॐभूर्देवास्तृप्यंताम् ॥ ॐभुवर्देवास्तृप्यंताम् ॥ ॐस्वर्देवास्तृप्यंताम् ॥ ॐभूर्भुवःस्वर्देवास्तृप्यंताम् ॥ निवीतीभूत्वा ॥ ॐसन कादिद्वैपायनादयऋषयस्तृप्यंताम् ॥ ॐभूर्ऋषयस्तृप्यंताम् ॥ ॐभुवर्ऋषय स्तृप्यंताम् ॥ ॐस्वर्ऋषयस्तृप्यंताम् ॥ ॐभूर्भुवःस्वर्ऋषयस्तृप्यंताम् ॥ अपस व्यंकृत्वा ॥ अकव्यवाडनलादयः पितरस्तृप्यंताम् ॥ ॐभूःपितरस्तृप्यंताम् ॥ ॐभुवःपितरस्तृप्यंताम् ॥ ॐस्वःपितरस्तृप्यंताम् ॥ अभूर्भुवःस्वःपितरस्तृप्यं ताम् ॥ सव्यंकृत्वा ॥ आचमनंकुर्युः ॥ ॐमोदस्तृप्यतु ॥ ॐप्रमोदस्तृप्यतु ॥ ॐसुमुखस्तृप्यतु ॥ ॐदुर्मुखस्तृप्यतु ॥ ॐअविघ्नस्तृप्यतु ॥ ॐविघ्नकर्तातृप्यतु ।

ॐब्रह्मादयोदेवास्तृप्यंतु । ॐगौतमस्तृप्यतु । ॐभरद्वाजस्तृप्यतु । ॐविश्वामि
त्रस्तृप्यतु । ॐजमदग्निस्तृप्यतु । ॐवसिष्ठस्तृप्यतु । ॐकश्यपस्तृप्यतु । ॐ
अत्रिस्तृप्यतु । ॐ दक्षस्तृप्यतु । ॐमरीचिस्तृप्यतु । ॐअंगिरास्तृप्यतु । ॐपुल
हस्तृप्यतु । ॐपुलस्त्यस्तृप्यतु । ॐक्रतुस्तृप्यतु । ॐप्रचेतास्तृप्यतु । ॐभृगुस्तृ
प्यतु । ॐमनवस्तृप्यंतु । इतिगोश्रृंगमात्रंजलमुद्धृत्यदेवतीर्थेनएकैकमंजलिंज
लेप्राङ्मुखःप्रक्षिपेत् ॥ येनतीर्थेनांजलिपूरणंतेनैवप्रक्षेपःसर्वत्र । अथोदङ्मुखोनि
वीतयूर्ध्वसुखस्तिरश्चोदक्षिणाग्रान्कुशान्कृत्वोदगग्रान्वाप्राजापत्येनतीर्थेनसनकादीं
स्तर्पयेत् ॥ सनकादयोमनुष्यास्तृप्यंतु ॥ द्वावंजली ॥ ततोपसव्यम् ॥ तानेवकुशा
न्मूलाग्राभ्यांद्विगुणीकृत्यदक्षिणामुखःपितृतीर्थेनकव्यवाडनलादींस्तर्पयेत ॥ कव्य
वाडनलादयोदेवपितरस्तृप्यंतु । त्रयोंऽजलयः ॥ अस्मत्पितृपितामहप्रपितामहास्तृ

प्यंतु ॥ मातामहप्रमातामहवृद्धप्रमातामहास्तृप्यंतु । आब्रह्मस्तंबपर्यंतंजगत्तृप्यतु
अत्रपराशरः॥शुक्लैस्तुतर्पयेद्देवान्मनुष्यान्धवलैस्तिलैः॥पितृन्संतर्पयेत्कृष्णैस्तर्पणेसर्व
दाद्विजः॥इति॥आश्वलायनः स्नानांगतर्पणंकृत्वायक्ष्मणेजलमाहरेत्॥ यन्मयादूषितं
तोयंशारीरमलसंचयैः ॥ तस्यपापस्यशुद्ध्यर्थंयक्ष्मैतत्तेतिलोदकम्॥ इत्याह ॥तत
स्तीरमागत्य । अग्निदग्धाश्चयेजीवायेऽप्यदग्धाःकुलेमम॥ भूमौदत्तेनतृप्यंतुतृप्तायां
तुपरांगतिम् ॥ इतिजलांजलिंतटेनिक्षिपेत् ॥ लतागुल्मेषुवृक्षेषुपितरोयेव्यवस्थि
ताः ॥ तेसर्वेतृप्तिमायांतुमयोत्सृष्टैःशिखोदकैः ॥ इतिमंत्रेणस्वदक्षिणभागेशिखाग्रं
निष्पीडयेत् ॥ इतिस्नानांगतर्पणम् ॥ एवमुक्तविधिनास्नानांगतर्पणंकृत्वाज
लाद्बहिर्निष्क्रम्यअरजकक्षालितेसदशेशुष्केअनाग्निदग्धेअच्छिद्रे अस्यूतेगैरिकादिरा
गेणाविकृतेशुक्लेकार्पासनिर्मितेपरिधानीयोत्तरीयवाससीपरिधायप्रशस्तदारुनिर्मिते

कुशास्तरयाच्छन्न आसने प्रागास्योवोदगास्यउपविशेत् ॥ ततोगंगादितीर्थमृत्तिक
यागार्हपत्यौपासनाग्निभस्मनावागोपीचंदनेनवायथाधिकारीभाले त्रिपुंड्रमूर्ध्वपुंड्रं
वातिलकंकुर्यात् ॥ अत्रार्थे ब्रह्मांडपुराणे चोक्तम् । ऊर्ध्वपुंड्रंद्विजःकुर्यात्क्षत्रियस्तु-
त्रिपुंड्रकम् ॥ अर्धचंद्रंतुवैश्यस्यवर्तुलंशूद्रजातिषु ॥ दग्धंजीर्णंचमलिनंमूषकापहृतं
तथा ॥ खादितंगोमहिष्याद्यैस्तत्त्याज्यंसर्वथाद्विजैः ॥ जीवत्पितृकेनोत्तरीयंवस्त्रंनधा
र्यम् । उत्तरीयंयोगपट्टंतर्जन्यांरजतंतथा ॥ नजीवत्पितृकैर्धार्यंज्येष्ठोवाविद्यतेयदि ॥
इतिवचनात् ॥ ततःकुशपवित्रोपग्रहपाणिः पादौजलेस्थलेवाकृत्वापूर्ववद्विराचम्यभग
वंतंपरमात्मरूपंनारायणंस्मृत्वामन्यान्हसंध्योपासनमारभेत् ॥ तत्रैवंक्रमः ॥ अथम
ध्यान्हसंध्या ॥ ममोपात्तदुरितक्षयद्वारारुद्रावाप्त्यै श्रीपरमेश्वरप्रीत्यर्थंमध्यान्हसंध्यो
पासनमहंकरिष्ये ॥ आगच्छवरदेदेवित्र्यक्षरेरुद्रवादिनि ॥ सावित्रिच्छंदसांमातारुद्रयो

नेनमोऽस्तुते ॥ आदौमध्यान्हसंध्यास्वरूपंविभावयेत् ॥ तच्चेत्थम् ॥ मध्यान्हसंध्या
श्वेतपदाश्वेतासनस्था श्वेतांबरा श्वेतवर्णाश्वेतमाल्यानुलेपनापंचमुखीदशभुजात्रिने
त्रात्रिशूलाक्षमालाकमंडलुकपालधारिणीसर्वाभरणभूषितासावित्रीयुवती वृषभवाहि
नीयजुर्वेदसंहितारुद्रदैवत्यात्रिपदाषट्कुक्षिः पंचशीर्षाग्निमुखारुद्रशिखाविष्णुहृदयाब्र
ह्मकवचासांख्यायनसगोत्राशुक्लवर्णाकर्मज्ञानेविनियोगः ॥ ततःप्राणायामंकुर्यात् ॥
ॐकारस्यब्रह्मऋषिर्गायत्रीछंदः परमात्मादेवताप्राणायामेविनियोगः ॥ सप्तव्याहृती
नांप्रजापतिविश्वामित्रजमदग्निभरद्वाजगौतमात्रिवसिष्ठकश्यपाऋषयः अग्निवायु
सूर्यबृहस्पतिवरुणेंद्रविश्वेदेवादेवताः गायत्र्युष्णिगनुष्टुब्बृहतीपंक्तित्रिष्टुब्जगत्यश्छं
दांसिप्राणायामेविनियोगः ॥ तत्सवितुरितिविश्वामित्रऋषिःसवितादेवतागायत्री
च्छंदःप्राणायामेविनियोगः॥ आपोज्योतिरितिप्रजापतिर्ऋषिर्ब्रह्माग्निसूर्यादेवताद्वि

पदागायत्रीच्छंदः॥ प्राणायामेविनियोगः ॥ एवंऋष्यादिकंस्मृत्वाबद्धासनोमौनीसं
मीलितनयनोदक्षिणपाण्यंगुष्ठेनदक्षिणनासिकां पीडयंस्तथाकनिष्ठिकानामिकाभ्या
मुत्तरनासिकांपीडयन्मध्यमातर्जन्यौमुंचन्सव्याहृतिकांसप्रणवांसाशिरसांगायत्रींपूर
कंकुभकरेचक्रमेणात्रिःपठेत्॥ॐभूःॐभुवःॐस्वःॐमहःॐजनःॐतपःॐसत्यंॐत
त्सावितुर्वरेण्यंभर्गो॰स्वरोम् ॥ इतिमंत्रान्नवधावृत्यमनसापठेत् ॥ ततआपः पुनंत्वि
तिआचमनंकुर्यात् ॥ आपःपुनंत्वितिमंत्रस्यकश्यपऋषिरापोदेवताअनुष्टुप्छंदः
आचमनेविनियोगः॥ॐआपःपुनंतुपृथिवींपृथ्वीपूतापुनातुमाम् ॥ यदुच्छिष्टमभो
ज्यंचयद्वादुश्चरितंमम ॥ सर्वंपुनातुमामापोऽसतांचप्रतिग्रहँस्वाहा ॥ इतिमंत्रे
णसकृदपआचम्यस्मार्ताचमनंकृत्वा साग्रान्कुशान्दक्षिणपाणौ धृत्वापोहिष्ठेत्या
दितृचेननवभिःपादैःप्रतिपादंशिरोहृदयपादयुगलानिमार्जयेत् ॥ आपोहिष्ठेतिति

सृणांसिंधुद्वीपऋषिरापोदेवतागायत्रीच्छंदःमार्जनेविनियोगः ॥ ॐआपोहिष्ठाम
योभुवः॥शिरसि॥ॐतानऊर्जेदधातन ॥ पादयोः ॥ ॐमहेरणायचक्षसे॥ हृदये ॥
ॐयोवःशिवतमोरसः ॥ हृदये ॥ ॐतस्यभाजयतेहनः॥ पादयोः ॥ ॐउशती
रिवमातरः ॥ शिरसि ॥ ॐतस्माअरंगमामवः ॥ शिरसि ॥ ॐयस्यक्षयाय
जिन्वथ ॥ हृदये ॥ ॐआपोजनयथाचनः ॥ पादयोः ॥ तथाचस्मृतिः। आपो
हिष्ठेत्यृचैःकुर्यान्मार्जनन्तुकुशोदकैः।प्रणवेनतुसंयुक्तंक्षिपेद्वारिपदेपदे ॥इति ॥ततश्चु
लकेनजलमादायतास्मिन्नासिकाग्रंनिधायद्रुपदादिवेतिऋचंपठित्वातज्जलं भूमावुत्सृ
ज्यपुष्पाणिपत्राणिचांबुमिश्राणिअंजलिनादायोत्थायप्रणवव्यात्हृतिपूर्विकया गाय
त्र्यैकांजलिंसूर्य्याभिमुखमुत्क्षिपेत ॥ ततऊर्ध्वबाहुःसूर्यमुदीक्षमाणोवक्ष्यमाणै

मंत्रैः सूर्योपस्थानंकुर्यात् ॥ तत्रमंत्राः ॥ उद्वयमितिमंत्रस्यप्रस्कण्वऋषिःसूर्योदेव
ता अनुष्टुप्छंदःसूर्योपस्थानेविनियोगः ॥ ॐउद्वयंतमसस्परिस्वःपश्यंतउत्तरम् ॥ दे
वंदेवत्रासूर्यमगन्मज्योतिरुत्तमम् ॥ उदुत्यमितिमंत्रस्यप्रस्कण्वऋषिःसूर्योदेवता
गायत्रीच्छंदःसूर्योपस्थानेविनियोगः ॥ ॐउदुत्यंजातवेदसंदेवंवहंतिकेतवः ॥ दृ
शेविश्वायसूर्यम् ॥ चित्रंदेवानामितिमंत्रस्यप्रकुत्सांगिरसऋषिःसूर्योदेवतात्रिष्टु
प्छंदः सूर्योपस्थानेविनियोगः ॥ ॐचित्रंदेवानामुदगादनीकंचक्षुर्मित्रस्यवरुणस्या
ग्नेः ॥ आप्राद्यावापृथिवीअंतरिक्षंꣳसूर्यआत्माजगतस्तस्थुषश्च ॥ तच्चक्षुरिति
मंत्रस्यदध्यङ्ङाथर्वणऋषिः सूर्योदेवताब्राह्मीत्रिष्टुप्छंदः सूर्योपस्थानेविनियोगः ॥
ॐतच्चक्षुर्देवहितंपुरस्ताच्छुक्रमुच्चरत ॥ पश्येमशरदःशतमशरदःशतꣳ शृणुयाम

शरदं ÷ शतंप्रब्रवामशरदं ÷ शतमदीनाःस्यामशरदं ÷ शतंभूयंश्चशरदः÷शतात् ॥
अथध्यानम् ॥ ॐतरुणार्कमंडलस्थांमध्ययुवतींसर्वशुक्लांपंचवक्त्रामग्निनेत्रामिंदुक
लाभूषणांत्रिशूलखड्गखट्वांगडमर्वंकुशचतुर्भुजांवृषभासनस्थां रुद्रदैवत्यांयजुर्वेदमु
दाहरंतींभूर्लोकाधिष्ठात्रींसावित्रींनामदेवतांध्यात्वाजपंकुर्यात् ॥ तेजोऽसीतिपरमे
ष्ठीप्रजापतिर्ऋषिर्यजुश्छंदआज्यंदेवतागायत्र्यावाहनेविनियोगः ॥ ॐतेजोऽसि
शुक्रमस्यमृतंमसिधामनामासिप्रियंदेवानामनाधृष्टंदेवयजंनमसि ॥ प्रणवस्यपर
ब्रह्मऋषिःपरमात्मादेवतागायत्रीच्छंदः ॥ व्याहृतीनांप्रजापतिर्ऋषिराग्निवायु
सूर्यादेवतागायत्र्युष्णिगनुष्टुप्छंदांसि । तत्सवितुरितिविश्वामित्रऋषिःसवितादेवता
गायत्रीच्छंदःजपेविनियोगः ॥ ॐभूर्भुवःस्वः तत्संवितुर्वरेण्यंभर्गोदेवस्यधीमहि ॥

धियोयोनः प्रचोदयात् ॥ इतिदशावरांशतमध्यांसहस्रपरमांवाजपेत् ॥ ततोविभ्रा
डित्यनुवाकसहस्रशीर्षेतिपुरुषसूक्तशिवसंकल्पमंडलब्राम्हणैःसूर्यमुपतिष्ठेत् ॥ विभ्रा
डित्यस्यविभ्राट्सौर्यऋषिःसूर्योदेवतात्रिष्टुप्छंदः ॥ उदुत्यमितितिसृणांप्रस्कण्वऋ
षिःसूर्योदेवतागायत्रीच्छंदः ॥ तंप्रत्नथेत्यस्यकाश्यपवत्सावृषीसोमोदेवतात्रिष्टुप्छं
दः ॥ अयंवेनइत्यस्यवेनऋषिःसोमोदेवतात्रिष्टुप्छंदः ॥ चित्रमित्यस्यकुत्सांगिरस
ऋषिःसूर्योदेवतात्रिष्टुप्छंदः ॥ आनइत्यस्यागस्त्यऋषिःसूर्योदेवतात्रिष्टुप्छंदः ॥ य
दद्येत्यस्यश्रुतकक्षसुतकक्षावृषीसूर्योदेवतागायत्रीच्छंदः ॥ तरणिरित्यस्यप्रस्कण्व
ऋषिःसूर्योदेवतागायत्रीच्छंदः ॥ तत्सूर्यस्येतिद्वयोःकुत्सऋषिःसूर्योदेवतात्रिष्टुप्छं
दः ॥ बण्महानितिद्वयोर्जमदग्निर्ऋषिःसूर्योदेवताआद्यस्यबृहतीच्छंदः ॥ श्रायंतइवे
त्यस्यनृमेधाऋषिःसूर्योदेवताबृहतीच्छंदः ॥ अद्यादेवाइत्यस्यकुत्सऋषिःसूर्यो

देवतात्रिष्टुप्छंदः ॥ आकृष्णेनेत्यस्याहिरण्यस्तूपांगिरसाऋषीसूर्योदेवतात्रिष्टुप्छंदः॥
सूर्योपस्थानेविनियोगः ॥ ॐविभ्राड्बृहतपिबतुसोम्यंमध्वायुदधंद्यज्ञपंताव
विंहुतम् ॥ वातंजूतोयोअंभिरक्षतित्मनांप्रजाःपुंपोषपुरुधाविराजति ॥ उदुत्य
म् ॥ ॐउदुत्यंजातवेदसंदेवंवहांतिकेतवं ÷ ॥ दृशेविश्वायसूर्य्यम् ॥ येनापा
वकचक्षसाभुरण्यंतजनाँ २ अनु ॥ त्वंवरुणपश्यसि ॥ दैव्यावध्वर्यूआगंतꣳर
थेनसूर्य्यत्वचा ॥ मध्वायज्ञꣳसमंजाथे ॥ तंप्रत्नथायंवेनश्चित्रंदेवानाम् ॥ तं
प्रत्नथा । तंप्रत्नथापूर्वथाविश्वथेमथाज्येष्ठतातिंबर्हिषदꣳस्वाविदम् ॥ प्रतीचीनं
वृजनंदोहसेधुनिमाशुंजयंतमनुयासुवर्धसे ॥ अयंवेनश्चोदयत्पृश्निगर्भाज्ज्योतिर्ज

रायूरजंसोविमाने ॥इममपा॒ऽसंगमेय्सूर्यस्याशिशुन्नविप्रामतिभीरिहांति॥चित्रंदेवाना
म् ॥ चित्रंदेवानामुदंगादनीकंचक्षुर्मित्रस्यवरुणस्याग्नेः ॥ आप्राद्यावापृथिवीअंतरिं
क्षꣳसूर्य्यंआत्माजगंतस्तस्थुषश्च॥आनः ॥ आनइडाभिर्विदथेसुशास्तिविश्वानरः
सवितादेवएतु ॥ अपियथायुवानोमत्संथानोविश्वंजगंदभिपित्वेमनीषा ॥ यदद्य ॥
यदद्यकच्चवृत्रहन्नुदगाअभिसूर्य्यं ॥सर्वंतदिन्द्रतेवसे ॥ तरणिः ॥ तरणिर्विश्वदर्शतो
ज्योतिष्कृदसिसूर्य्य ॥ विश्वमाभासिरोचनम् । तत्सूर्य्यस्यदेवत्वंतन्महित्वंमध्याक
र्तोर्विततꣳसंजभार ॥ यदेदयुक्तहरितःसधस्थादाद्रात्रीवासस्तनुतेसिमस्मै ॥ त
न्मित्रस्यवरुणस्याभिचक्षेसूर्य्योरूपङ्कृणुतेद्योरुपस्थे ॥ अनंतमन्यद्रुशदस्यपाजः

कृष्णमन्यद्धरितःसंभरंति ॥ बण्महाँअसिसूर्य्यबडादित्यमहाँ२असि ॥ महस्तेसतो
महिमापनस्यतेऽद्धादेवमहाँ२असि ॥ बट्सुर्य्यश्रवसामहाँ२असिसत्रादेव महाँ२असि
मन्हादेवानामसुर्य्यःपुरोहितोविभुज्योतिरदाभ्यम् ॥आयंतइवसुर्य्यंविश्वेदिंद्रस्य भक्ष
त ॥ वसूनिजातेजनपानओजसाप्रतिभागंनदीधिम ॥ अद्यादेवाउदितासुर्य्यस्यनि
रंहसःपिपृतानिरवद्यात ॥ तन्नोमित्रोवरुणोमामहंतामदितिःसिंधुःपृथिवीउत
द्यौः ॥ आकृष्णेनरजसावर्तमानोनिवेशयन्नमृतंमर्त्यंच ॥ हिरण्ययेनसवितारथेना
देवोयातिभुवनानिपश्यन् ॥ ततःपुरुषसूक्तंजपेत ॥ सहस्रशीर्षेतिषोडशर्चस्यनारा
यणः पुरुषऋषिःपंचदशानामनुष्टुप्छंदः षोडश्यास्त्रिष्टुप्छंदः पुरुषोदेवतासूर्योपस्था

नेविनियोगः ॥ ॐसहस्रशीर्षापुरुषःसहस्राक्षःसहस्रपात ॥ सभूमिꣳसर्वतस्पृत्वा
त्यतिष्ठद्दशांगुलम् ॥ पुरुषएवेदꣳसर्वंयद्भूतंयच्चभाव्यम् ॥ उतामृतत्वस्येशानोयद
न्नेनातिरोहति ॥ एतावानस्यमहिमातोज्यायाँश्चपुरुषः ॥ पादोस्यविश्वाभूतानित्रिपा
दस्यामृतंदिवि ॥ त्रिपादूर्ध्वउदैत्पुरुषःपादोऽस्येहाभवत्पुनः ॥ ततोविष्वङ्व्यक्राम
त्साशनानशनेअभि ॥ ततोविराडजायतविराजोअधिपूरुषः ॥ सजातोअत्यरिच्यतप
श्चाद्भूमिमथोपुरः ॥ तस्माद्यज्ञात्सर्वहुतःसंभृतंपृषदाज्यम् ॥ पशूँस्ताँश्चक्रेवायव्याना
रण्याग्राम्याश्चये ॥ तस्माद्यज्ञात्सर्वहुतऋचःसामानिजज्ञिरे ॥ छंदाꣳसिजज्ञिरेत
स्माद्यजुस्तस्मादजायत ॥ तस्मादश्वाअजायंतयेकेचोभयादतः ॥ गावोहजज्ञिरे

तस्मात्तस्माज्जाताअजावयः ॥ तंयज्ञंबर्हिषिप्रौक्षन्पुरुषंजातमग्रतः ॥ तेनदेवाअ
यजंतसाध्याऋषयश्चये ॥ यत्पुरुषंव्यदधुः कतिधाव्यकल्पयन् ॥ मुखंकिमस्यासी
त्किंबाहूकिमूरूपादाउच्येते ॥ ब्राम्हणोऽस्यमुखमासीद्बाहूराजन्यःकृतः ॥ उरूतद
स्ययद्वैश्यःपद्भ्याᳬशूद्रोअजायत ॥ चंद्रमामनसोजातश्चक्षोःसुर्योअजायत ॥ श्रो
त्राद्वायुश्चप्राणश्चमुखादग्निरजायत ॥ नाभ्याआसीदंतरिक्षᳬशीर्ष्णोद्यौःसमवर्तत ॥
पद्भ्यांभूमिर्दिशःश्रोत्रात्तथालोकाँ२अकल्पयन् ॥ यत्पुरुषेणहविषादेवायज्ञमतन्व
त ॥ वसंतोऽस्यासीदाज्यंग्रीष्मइध्मःशरद्धविः ॥ सप्तास्यासन्परिधयस्त्रिःसप्तसमिधः
कृताः ॥ देवायद्यज्ञंतन्वानाअबध्नन्पुरुषंपशुम् ॥ यज्ञेनयज्ञमयजंतदेवास्तानिधर्माणि

 

 

प्रथमान्यासन् ॥ तेहनाकंमहिमानः सचंतयत्रपूर्वेसाध्याःसंतिदेवाः ॥ ॥ अथशिवसं
कल्पः ॥ ॥ यज्जाग्रतइतिषडृचस्यशिवसंकल्पऋषिर्मनोदेवतात्रिष्टुप्छंदः सूर्योपस्था
नेविनियोगः ॥ ॐयज्जाग्रतोदूरमुदैतिदैवंतदुसुप्तस्यतथैवैति ॥दूरंगमंज्योतिषांज्यो
तिरेकंतन्मेमनः शिवसंकल्पमस्तु ॥ येनकर्माण्यपसोमनीषिणोयज्ञेकृण्वंतिविदथे
षुधीराः॥ यदपूर्वंयक्षमंतःप्रजानांतन्मेमनः शिवसंकल्पमस्तु ॥ यत्प्रज्ञानमुतचेतोधृ
तिश्चयज्ज्योतिरंतरमृतंप्रजासु ॥ यस्मान्नऋतेकिंचनकर्मक्रियतेतन्मेमनः शिवसंक
ल्पमस्तु॥येनेदंभूतंभुवनंभविष्यत्परिगृहीतममृतेनसर्वम् । येनयज्ञस्तायतेसहोतात
न्मेमनः शिवसंकल्पमस्तु ॥यस्मिन्नृचःसामयजूंषियस्मिन्प्रतिष्ठितारथनाभाविवा

रा॰ ॥ यस्मिँश्चित्तꣳसर्वमोतंप्रजानांतन्मेमनः शिवसंकल्पमस्तु॥सुषारथिरश्वानिवय
न्मनुष्यान्नेनीयतेभीशुभिर्वाजिनइव ॥ हृत्प्रतिष्ठंयदजिरंजविष्ठंतन्मेमनः शिवसंक
ल्पमस्तु ॥ अथमंडलब्राह्मणम्॥मंडलब्राह्मणस्यविवस्वानृषिर्वायुर्देवतासूर्योपस्थाने
विनियोगः॥ ॐयदेतन्मंडलंतपतितन्महदुक्थन्ताऋचꣳसाऋचांलोकोऽथयदेतदर्चि
र्दीप्यतेतन्महाव्रतंतानिसामानिससाम्नांलोकोऽथयएषएतस्मिन्मंडलेपुरुषꣳसोऽग्निः
स्तानियजूꣳषिसयजुषांलोकः ॥ १ ॥ सैषात्रय्येवविद्यातपतितद्धैतदप्यविद्वाꣳसआ
हुस्त्रयीवाएषाविद्यातपतीवाग्घैवतत्पश्यंतित्वदाति ॥ २ ॥ सएषएवमृत्युर्यएषएत
स्मिन्मंडलेपुरुषोऽथैतदमृतंयदेतदर्चिर्दीप्यतेतस्मान्मृत्युर्नम्रियतेमृते ह्यंतस्तस्मादु

नदृश्यतेमृतेह्यंतः ॥३॥ तदेषश्लोकोभवत्यंतरमृत्योरमृतामित्यवरꣳह्येतन्मृत्योरमृतंमृ
त्यावमृतमाहतीमत्यितोस्मीन्हिपुरुषएतन्मडंलप्रातिष्ठिततंपातमृत्युर्विवस्वतंवस्तइ
त्यसौवा आदित्योऽविवस्वानेषह्यहोरात्रेविवस्तेतमेषवस्तेसर्वतोह्येनेन परिवृतोमृ
त्योरात्माऽविवस्वतीत्येतस्मिन्हिमंडलएतस्यपुरुषस्यात्मैतदेषश्लोकोभवति ॥४॥ त
योर्वा एतयोरुभयोरेतस्यचार्चिषएतस्यचपुरुषस्यैतन्मंडलप्रतिष्ठातस्मान्महदुक्थं
परस्मैनश ꣳसेन्नेदेतांप्रातिष्ठांछिनदाइत्येताꣳहसत्प्रतिष्ठांछिन्तेयोमहदुक्थंयंपरस्मैश
ꣳसातितस्मादुक्थशसंभूयिष्ठंपरिचक्षतेप्रतिष्ठाच्छिन्नोहिभवतीत्यधिदैवतम् ॥ ५ ॥ अ
थाधियज्ञम् ॥ यदेतन्मंडलंतपत्ययꣳसरुक्मोऽथयदेतदर्चिर्दीप्यतऽइदंतत्पुष्करप

र्णमापोह्येताआपः पुष्करपर्णमथयऽएषएतस्मिन्मंडलेपुरुषोऽयमेवसयोयꣳहिरणम
यः पुरुषस्तदेतदेवैतत्रयꣳसꣳस्कृत्येहोपधत्तेतद्यज्ञस्यै वानुसꣳस्थामूर्ध्वमुत्क्राम
तितदेतमप्येतियऽएषतपतितस्मादग्निंनाद्रियेतपरिहंतुमामुत्रह्येषतदाभवतीत्युएवा
धियज्ञम् ॥६॥ अथाध्यात्मम् ॥ यदेतन्मडलंतपतियश्चैषरुक्मइदंतच्छुक्लमक्षन्नथयदे
तदर्चिर्दीप्यतेयच्चैतत्पुष्करपर्णमिदंतत्कृष्णमक्षन्नथयऽएषऽएतस्मिन्मंडलेपुरुषोय
श्चैषहिरणमयः पुरुषोयमेवसयोयंदक्षिणेक्षन्पुरुषः ॥ ७ ॥ सऽएषऽएवलोकंपृणातामेष
सर्वोग्निरभिसंपद्यतेतस्यैतान्मिथुनंयोयꣳसव्येक्षन्पुरुषोर्धमुहैतदात्मनोयान्मिथुनंय
दावैसहमिथुनेनाथसर्वोथकृत्स्नः कृत्स्नतायैतद्यत्तेद्वेभवतोद्वंद्वꣳहिमिथुनंप्रजनन

न्तस्माद्द्वेद्वेलोकंपृणेऽउपधीयेतेतस्मादुद्वाभ्यांद्वाचीतिंप्रणयंति ॥ ८ ॥ सऽएषऽए
वेंद्रोयोयंदक्षिणेक्षन्पुरुषोऽथेयमिंद्राणीताभ्यां देवाएतांविधृतिमकुर्वन्नासिकांतस्मा
ज्जायायाऽअंतेनाश्नीयाद्वीर्यवान्हास्माज्जायतेव्वीर्यवंतमुहसाजनयतियस्याऽअंते
नाश्नाति॥९॥तदेतद्देवव्रतꣳराजन्यबंधवोमनुष्याणामनुतमांगोपायंतितस्माद्वुतेषु
व्वीर्य्यवाञ्जायतेमृतवाकाव्वयसाꣳसाक्षिप्रश्येनंजनयति ॥ १० ॥ तौहृदयस्याका
शंप्रत्यवेत्यमिथुनीभवतस्तौयदामिथुनस्यांतगच्छतोथहैतत्पुरुषःस्वपितितद्यथाहै
वेदंमानुषस्यमिथुनस्यांतंगत्वासंविदइभत्येवꣳहैवैतसंविदऽइवभवतिदैवꣳह्येतन्मि
थुनंपरमोह्येषआनन्दः॥११॥तस्मादेवंव्वित्स्वप्याल्लोंक्यꣳहैतेएवतद्वेवतेमिथुनेनाप्रि

येणधाम्नासमर्धयतितस्मादुहस्वपंतं धुरेवनबोधयेन्नेदेतेदेवतेमिथुनीभवंत्यौहिनसा
नीतितस्मादुहैतत्सुखपुषःश्लेष्मणमिवमुखंभवत्येतेएवतद्देवतेरेतःसिंचतस्तस्माद्रे
तसऽइदर्ठंसर्वर्ठंसंभवतियदिदंकिंच ॥ १२ ॥ सुऽएषऽएवमृत्युर्यऽएषऽएतस्मिन्मंडले
पुरुषोयश्चायंदक्षिणेक्षन्पुरुषस्तस्यहैतस्यहृदये पादावतिहतौतौहैतदाच्छिद्योत्क्राम
तिसयदोत्क्रामत्यथहैतत्पुरुषोम्रियतेतस्मादुहैतत्प्रेतमाहुराच्छेद्यस्येति ॥ १३ ॥ ए
षऽउऽएवप्राणएषाहीमाः सर्वाःप्रजाः प्रणयातितस्यैतेप्राणाः स्वाः सयदास्वपित्य
थैनमतेप्राणाःस्वाऽअपियंतितस्मात्स्वाप्ययः स्वाप्ययोहवैतत्स्वप्नइत्याचक्षतेपरो
क्षंपरोक्षकामाहिदेवाः ॥ १४ ॥ सऽएतैःसुप्तोनकस्यचनवेदनमनसासंकल्पयति

 



नव्वाचान्नस्यरसंविजानातिनऽप्राणेनगधंविजानातिनचक्षुषा पश्यातिनश्रोत्रेण शृ
णोत्येतꣳह्येतेतदापीताभवंतिसएषएकःसन्प्रजासुबहुधाव्याविष्टस्तस्मादेका सती
लोकंपृणासर्वमग्निमनुविभवत्यथयदेकएवतस्मादेका ॥ १५ ॥ तदाहुरेकोमृत्युर्बहवइ
त्येकश्चबहवश्चेतिहब्रूयाद्यदहासावमुत्रतेनैकोऽथयदिहप्रजासुबहुधाव्याविष्टस्तेनोब
हवः ॥ १६ ॥ तदाहुरंतिकेमृत्युर्दूराइत्यंतिकेचदूरेचेतिहब्रूयाद्यदहायमिहाध्या
त्मंतेनांतिकेऽथयदसावमुत्रतेनोदूरे ॥ १७ ॥तदेषश्लोकोभवत्यन्नेभात्यपश्रितोरसा
नाꣳसंक्षरेमृतइतियदेतन्मंडलंतपतितदन्नमथयएषएतस्मिन्मंडलेपुरुषःसोऽत्तास- 
एतस्मिन्नन्नेपश्रितोभातीत्यधिदैवतम् ॥ १८ ॥ अथाध्यात्ममिदमवशरिरमन्नमथ-

योऽयंदक्षिणेक्षन्पुरुषꣳसोऽत्तासएतास्मिन्नन्नेपाश्रितोभाति ॥ १९ ॥ तमेतमग्निरित्य

ध्वर्यवउपासते । यजुरित्येषहीदꣳसर्वंयुनक्तिसामेतिच्छन्दोगाऽएतस्मिन्हीदꣳस

र्वꣳसमानमुक्थमितिबह्वृचाऽएषहीदꣳसर्वमुक्थापयतियातुरितियातुविदऽएतेनही

दꣳसर्वंयतंविषमितिसर्पाꣳसर्पइतिसर्पविदऽऊर्गितिदे वारायिरितिमनुष्यामायेत्यसु

राꣳस्वधेतिपितरोदेवजनइतिदेवजनविदोरूपमितिगंधर्वागंधऽइत्यप्सरसस्तंयथाय

थोपासतेतदेवभवतितद्धैनान्भूत्वावतितस्मादेनमेवंवित्सर्वैरेवैतैरुपासीतसर्वꣳहैत

द्भवतिसर्वꣳहैनतद्भूत्वावाति॥ २०॥ सऽएषऽत्रीष्टकोग्निर्ऋग्गेकायजुरकासामैकातद्य

कांचात्रचौंपदधातिरुक्मऽएवतस्याऽआयतनमथयांयजुषापुरुषएवतस्याआयतन

५

मथयाꣳसाम्नापुष्करपर्णमेवतस्याऽआयतनमेवंत्रीष्टकः॥२१॥ तेवाऽएतेऽउभेऽएष
चरुक्मऽएतच्चपुष्करपर्णमेतंपुरुषमपीतऽउभेह्यृक्सामेयजुरपीतएवंवेकेष्टकः ॥ २२ ॥
सऽएषऽएवमृत्युर्यऽएषऽएतस्मिन्मंडलेपुरुषोयश्चायंदक्षिणेक्षन्पुरुषꣳसऽएषऽएवंविद
आत्माभवतिसयदैवंविदस्माल्लोकात्प्रेत्यथैतमेवात्मानमभिसंभवतिसोऽमृतोभव
तिमृत्युर्ह्यस्यात्माभवति ॥ २३ ॥ नैववाइदमग्रेवसदासीन्नैवसदासीत् ॥ इतिमंडल
ब्राह्मणम् ॥ एवंवाङ्मनःशरीरैर्नमस्कृत्यासनोपर्युपविशेत् ॥ अथब्रह्मयज्ञः ॥ तस्यचका
लश्छंदोगपरिशिष्टोक्तोग्राह्यः ॥ सयथा ॥ सचार्वाक्तर्पणात्कार्यःपश्चाद्वाप्रातराहुतेः । वै
श्वदेवावसानेवानान्यत्रेतिनिमित्तकात् ॥ इति ॥ अथासनोपरिन्यस्तेषुप्रागग्रेषुस्व
स्तिकासनेनप्राङ्मुखउपविष्टःपाण्योर्मध्येसप्तपर्णंदर्भमादायदक्षिणोरौमुकुलीकृतमं

जलिंनिधायप्रणवव्याहृतिपूर्विकांगायत्रींजपित्वाऋुष्याद्यनुसंधायइषेत्वेत्यादियथा
शक्तिब्रह्मयज्ञंकुर्यात ॥ इषेत्वेत्याद्यध्यायांतमनुवाकांतंवापठेत् ॥ अंतेच ॐस्वस्तिइ
तिब्रूयात् ॥ ततउपग्रहव्यतिरिक्तदर्भानुदीच्यांदिशिप्रक्षिपेत् ॥ ततआचामेत् ॥
एवमेवप्रत्यहंब्रह्मयज्ञकरणेविधिः । कृष्णोऽस्याखरेष्ठइत्यादिचयथाशक्तितत्रपठेत् ।
अथवासंपूर्णब्रह्मयज्ञकरणाशक्तौमंत्राद्यकंडिकांपठित्वातिमार्कंडिकांपठेत्ततोब्राह्म
णाद्यांपठित्वांतिमांपठेतएवमुपर्युपर्यध्ययनेनार्थदृग्ग्रंथान्समापयेत् । अत्रशौनकः ।
स्वरवर्णलयोपेतमात्रास्थानक्रियान्वितम् । वेदमेवंपठेद्यस्तुस्वाध्यायफलमश्नुते ॥
ॐकारंव्याहृतीस्तिस्रोगायत्रींत्रिपदांतथा । मनसैवमनुस्मृत्यवेदादिकमुपक्रमेत् ॥
॥ इति ॥ ब्रह्मयज्ञाध्ययनस्यापूर्ववेदाध्ययनवदनध्यायदिनेपुत्यागप्रसक्तौमनुराह ।
वेदोपकरणेचैवस्वाध्यायेचैवनित्यके ॥ नानुरोधोऽस्त्यनध्यायेहोममंत्रेपुचैवहि ॥ नै

त्यकेनास्त्यनध्यायोब्रह्मसत्रंहिततत्स्मृतम् ॥ इति ॥ श्रुतिरपि । तस्यवाएतस्ययज्ञस्य द्वावनध्यायौयदात्माशुचिर्यद्देशइति । इति ॥ अत्रविशेषोगौतमेनोक्तः । अथयदिवा तोवायात्स्तनयेद्वाविद्युत्पतेद्वावस्फूर्जेद्वाएकामृमेकंवायजुरेकंवासीमाभिव्याहरेद्भूर्भु वःस्वःसत्यंतपःश्रद्धायांजुहोमीति । इति । अत्र । वातादिशब्दाअनध्यायोपलक्ष णीभूताज्ञातव्याःअस्मात्प्रमाणादनध्यायेसत्यप्येकामेवर्चंपठेन्नाधिकंकिंचिदितिदा ध्यन्यते । एवमुक्तविधिनाब्रह्मयज्ञंकृत्वातर्पणंकुर्यात् ॥ अथतर्पणम् ॥ ॥देशकालौसंकी र्त्यममआत्मनः श्रुतिस्मृतिपुराणोक्तफलप्राप्त्यर्थंउत्सर्जनांगत्वेनदेवर्षिपितृतर्पणंक रिष्ये ॥ इतिसंकल्प्य ॥ ततस्त्रीन्दर्भान्प्रागग्रान्दक्षिणपाणौगृहीत्वादेवानावाहयेत् ॥ विश्वेदेवासइतिगृत्समदऋषिर्विश्वेदेवादेवतागायत्रीच्छंदआवाहनेविनियोगः ॥ ॐ विश्वेदेवास॒ऽआगतशृणुतामइ॒मꣳहवम् ॥ एदंब॒र्हिर्निषीदत ॥ विश्वेदेवाः शृणुतेममि

तिसुहोत्रऋषिर्विश्वेदेवादेवतात्रिष्टुप्छंदःजपेविनियोगः ॥ ॐविश्वेदेवाःशृणुतेमꣳ
हवंमेयेऽअंतरिक्षेयऽउपद्यविष्ठ ॥ येअग्निजिव्हाउतवायजंत्राआसद्यास्मिन्बर्हिषिं
मादयध्वम् ॥ ततःसव्यकरान्वारब्धसकुशदक्षिणकरेणतोयंगृहीत्वाअक्षतांश्चगृही
त्वादेवतीर्थेन ॐकारपूर्वकंब्रह्मादिदेवांस्तर्पयेत । उक्तंचपद्मपुराणेशारीरकदेवान्
ब्रह्मर्षीन्सर्वांस्तर्पयेदक्षतोदकैः ॥ तर्पयेच्चपितॄन्भक्त्यासतिलोदकचंदनैः ॥ इतियोगि
याज्ञवल्क्यः ॥ यद्युद्धृतंप्रसिंचेत्तुतिलान्संमिश्रयेज्जले ॥ अतोऽन्यथातुसव्येनतिलाग्रा
ह्याविचक्षणैः ॥ इति ॥ तर्पणप्रकारश्च ॥ ॐब्रह्मा तृप्यताम् । ॐविष्णुस्तृप्यताम् । ॐरु
द्रस्तृप्यताम् ॥ उदकोपस्पर्शः ॥ ॐप्रजापतिस्तृप्यतु ॐदेवास्तृप्यं० ॐछंदांसितृ
प्यं० ॐवेदास्तृप्यं० ॐऋषयस्तृप्यं० ॐपुराणाचार्यास्तृप्यं० ॐगंधर्वास्तृप्यं० ॐइ

तराचार्यास्तृप्यं० ॐसंवत्सरःसावयवस्तृप्यताम्॥ॐदेव्यस्तृप्यंताम्॥ अप्सरसस्तृ
प्यंताम्॥ॐदेवानुगास्तृप्यंताम् । ॐनागास्तृप्यंताम् । ॐसागरास्तृप्यंताम् ॥
ॐपर्वतास्तृप्यंताम् ॥ ॐसरितस्तृप्यंताम् ॥ ॐमनुष्यास्तृप्यं०ॐयक्षास्तृप्यंता
म् ॥ ॐरक्षांसितृप्यंताम् ॥ उदकोपस्पर्शः ॥ ॐपिशाचास्तृप्यंताम् । ॐसुपर्णा
स्तृप्यंताम् ॥ ॐभूतानितृप्यंताम् ॥ ॐपशवस्तृप्यंताम् ॥ वनस्पतयस्तृप्यंताम्
ॐओषधयस्तृप्यं० । भूतग्रामचतुर्विधस्तृप्यं० ॥ इतिप्रत्येकमेकैकेनचुलकेनतर्प
यित्वोत्तराभिमुखोनिवीतीभूत्वांजलौतिरश्चः कुशानापश्चगृहीत्वाद्वौद्वावंजलीजलेन
पूरितौदद्यात्॥ ॐसनकस्तृप्यता० । ॐसनन्दनस्तृप्यता० ॐसनातनस्तृप्यता० ।
ॐकपिलस्तृप्यता० । ॐआसुरीस्तृप्यता० ॐवोढुस्तृप्यता० । पंचशिखस्तृप्यताम्।
एवंद्वौद्वावंजलीएकैकस्मैदत्त्वादाक्षिणाभिमुखःप्राचीनावीतीसव्यंजान्वाच्यांगुष्ठेनाति

लानादायदक्षिणेनपाणौगृहीत्वातानेवकुशान्दक्षिणमूलान्कृत्वाशंतस्त्वेत्यनयाकव्य
वाडनलादीनावाह्यायंतुनइतिजपित्वाकव्यवाडनलींदार्स्तर्पयेत्तदेवं। उशंतस्त्वेतिप्र
जापतिर्ऋषिः॥पितरोदेवताअनुष्टुप्छंदःआवाहनेविनियोगः॥ॐउशंतस्त्वानिधीमह्यु
शंतःसमिंधीमहि॥उशन्नुशतआवहापितॄन्हविषेअत्तवे॥ आयंतुनःइत्यस्यशंखऋषिः
पितरोदेवतात्रिष्टुप्छंदःजपेविनियोगः ॥ ॐआयंतुनःपितरःसोम्यासोऽग्निष्वात्ताः
पथिभिर्देवयानैः॥अस्मिन्यज्ञेस्वधयामदंतोऽधिब्रुवंतुतेऽवन्वस्मान्॥ततोऽद्भिरंजलिं
प्रपूर्यपितृतीर्थेनांजलिंक्षिपेत् ॥ ॐकव्यवाडनलस्तृप्यताम् ३॥ ॐसोमस्तृप्यताम्
३॥ ॐयमस्तृप्यताम् ३ ॥ अग्निष्वात्ताःपितरस्तृप्यंताम् ३॥ सोमपाःपितरस्तृप्यंता
म् ३ ॥ बर्हिषदःपितरस्तृप्यंताम् ३ ॥ ॐयमायनमः १ ॐधर्मराजायनमः २

ॐमृत्यवेनमः ३ ॐअंतकायनमः ४ ॐवैवस्वतायनमः ५ ॐकालायनमः ६
ॐसर्वभूतक्षयायनमः ७ ॐऔदुंबरायनमः ८ ॐदध्नायनमः ९ ॐनीलायनमः
१० ॐपरमेष्ठिनेनमः ११ ॐवृकोदरायनमः १२ ॐचित्रायनमः १३ ॐचित्रगुप्ताय
नमः १४॥ ततःपितृतीर्थेनदक्षिणाभिमुखोद्विगुणीकृतेनदर्भेणतिलमिश्रितेनजलेन
पित्रादिभ्यस्त्रींस्त्रीनंजलीन्दद्यात् ॥ अंजलीनियमस्तुव्यासवचनादनुसंधेयः। सयथा
एकैकमंजलिंदेवाद्वौद्वौतुसनकादयः ॥ अर्हंतिपितरस्त्रींस्त्रींस्त्रियस्त्वेकैकमंजलिम् ॥
॥इति॥ अमुकगोत्रोऽस्मत्पिताअमुकशर्मातृप्यतामिदंजलंतस्मैस्वधाइत्येकांजलिंद
त्त्वैवमपरमंजलिद्वयंदद्यात् । ततः अमुकगोत्रोऽस्मत्पितामहोऽमुकशर्मातृप्यतामि
दंजलंतस्मैस्वधा ३॥ अस्मत्प्रपितामहतृ० ३॥ ततः । उदीरतामंगिरसआयंतुनइ
तितिसृणांशंखःप्रजापतिऋषिःपितरोदेवतास्त्रिष्टुप्छंदः ॥ ऊर्जमित्यस्यप्रजापतिऋ

षिः पितरोदेवताविराट्छंदः ॥ येचेहेत्यस्यप्रजापत्यश्विसरस्वत्यऋषयः पितरोदेवतात्रिष्टुप्छंदः ॥ मधुवाताइतितिसृणांगौतमऋषिर्विश्वेदेवादेवतागायत्रीच्छंदः ॥ सर्वेषांमंत्राणां प्रसेकाख्येकर्मणिविनियोगः ॥ ॐउदीरतामवरउत्परासउन्मध्यमाःपितरःसोम्यासः ॥ असुंयईयुरवृकाऋतज्ञास्तेनोऽवंतुपितरोहवेषु ॥ ॐअंगिरसोनःपितरोनवग्वाअथर्वाणोभृगवःसोम्यासः ॥ तेषांवयꣳसुमतौयज्ञियानामपिभद्रेसौमनसेस्याम ॥ ॐआयंतुनःपितरःसोम्यासोग्निष्वात्ताःपथिभिर्देवयानैः ॥ अस्मिन्यज्ञेस्वधयामदंतोधिब्रुवंतुतेऽवंत्वस्मान् ॥ ॐऊर्जंवहंतीरमृतंघृतंपयःकीलालंपरिस्रुतम् ॥ स्वधास्थतर्पयतमापितॄन् ॥ ॐपितृभ्यःस्वधायिभ्यःस्वधानमः ॥ पितामहेभ्यःस्वधायिभ्यःस्वधानमःप्रपितामहेभ्यःस्वधायिभ्यःस्वधानमः अक्षन्पितरोमीम

दन्तापितरोतीतृपंतापितरःपितरःशुधंध्वम् ॥ ॐ येचेहपितरोयेचनेहयाँ२श्चविद्मयाँ२
उंचनप्रविद्म ॥ त्वंव्वेत्थयतितेजातवेदःस्वधाभिर्य्यज्ञःसुकृतंजुषस्व ॥ ॐ मधुव्वाता
ऋतायतेमधुक्षरंतिसिंधवः ॥ माध्वीर्नःसंत्वोषधीः ॥ ॐ मधुनक्तमुतोषसोमधुमत्पा
र्थिवःरजः ॥ मधुद्यौरस्तुनःपिता ॥ ॐ मधुमान्नोव्वनस्पतिर्मधुमाँ२अस्तुसूर्य्यः ॥
माध्वीर्गावोभवन्तुनः ॥ तृप्यध्वंतृप्यध्वंतृप्यध्वं ॥ इत्यंजलित्रयंपित्रादिभ्योदद्यात् ॥
ततोमातृतर्पणंकुर्यात् ॥ अत्रव्यासोक्तःक्रमोवगंतव्यः । पितृभ्यःप्रथमंदद्यात्ततोमातृ
भ्यएवच । ततोमातामहानांचतत्पत्नीनांततोजलम् ॥ इति । मरीचिरपीममेवार्थंवि
विशेषयति ॥ अंतर्मातामहान्कृत्वामातॄणांयः प्रयच्छति ॥ उदकंपिंडदानंचनरकंस
तुगच्छति ॥ इति अमुकगोत्रास्मन्माताअमुकीदेवीतृप्यतामिदंजलंतस्यैस्वधा ॥

एवमेवपुनर्द्विवारंदद्यात् ॥ अमुकगोत्रास्मात्पितामहीअमुकीदेवीतृप्यतामिदंजलंत
स्यैस्वधा ३॥ अमुकगोत्राअस्मत्प्रपितामहीअमुकीदेवीतृप्यतामिदंजलंतस्यैस्वधा
॥इतित्रिवारंजलंदद्यात्॥ अत्रवृद्धशातातपः मातृमुखाश्चयास्तिस्रस्तासांदद्याज्ज
लांजलीन् ॥ त्रींस्त्रीनेवतथान्यासांदद्यादेकैकमंजालिम् ॥ इात ॥ ततः नमोवइत्यष्टानां
प्रजापतिर्ऋषिःरसशोषजीवस्वधाघोरमन्युपितरोदेवताःपाठेविनियोगः ॥ ॐनमोवः
पितरोरसायनमोवःपितरःशोषायनमोवःपितरोजीवायनमोवःपितरःस्वधायैनमोव
ःपितरोघोरायनमोवःपितरोमन्यवेनमोवःपितरःपितरोनमोवोगृहान्नःपितरोदत्तस
तोवःपितरोदेष्मैतद्वःपितरोवासः ॥ इतिपठित्वा ॥ मातामहादींस्तर्पयेत् ॥ तद्य
था ॥ अमुकगोत्रोऽस्मन्मातामहोऽमुकशर्मातृप्यतामिदंजलंतस्मैस्वधा ३ ॥ अमु

कगोत्रोऽस्मत्प्रमातामहोऽमुकशर्मातृप्यतामिदंजलंतस्मैस्वधा३ ॥ अमुकगोत्रोऽस्मद्वृद्धप्रमातामहोऽमुकशर्मातृप्यतामिदंजलंतस्मैस्वधा३ ॥ ततः । अमुकगोत्रास्मन्मातामहीअमुकीदेवीतृप्यतामिदंजलंतस्यैस्वधा ॥ इतित्रिवारंजलंदद्यात् ॥ ॐअमुकगोत्रास्मत्प्रमातामहीअमुकीदेवीतृप्यतामिदंजलंतस्यैस्वधा ३ ॥ अमुकगोत्रास्मद्वृद्धप्रमातामहीअमुकीदेवीतृप्यतामिदंजलंतस्यस्वधा ३ ॥ इतित्रिरंजलींदद्यात ॥ ततआचार्यादीन्नामगोत्रस्वधाकारैस्तर्पयेत् ॥ आचार्यंतत्पत्नीभार्यांपुत्रपितृव्यतत्पत्नीमातुलतत्पत्नीसुहृच्छिष्यांस्तर्पयेत् ॥ अमुकगोत्रोऽस्मद्गुरुरमुकशर्मातृप्यतामिदंजलंतस्मैस्वधा ॥ अमुकगोत्रास्मद्गुरुपत्नीअमुकीदेवीतृप्यतामिदंजलंतस्यैस्वधा ॥ एवंसर्वतर्पणंकर्तव्यम् ॥ ततः ॥ येबांधवाबांधवावायेन्यजन्मनिबांधवाः ॥ तेसर्वेतृप्तिमायांतुयेचास्मत्तोयकांक्षिणः ॥ येमकुलेलुप्तपिंडाः पुत्रदा

रविवर्जिताः॥तेषांहिदत्तमक्षय्यमिदमस्तुतिलोदकम् ॥ आब्रह्मस्तंबपर्यंतंदेवर्षिपितृ
मानवाः ॥ तृप्यंतुपितरःसर्वेमातृमातामहादयः ॥ अतीतकुलकोटीनांसप्तद्वीपनिवा
सिनाम् ॥ आब्रह्मभुवनाल्लोकादिदमस्तुतिलोदकम् ॥ इतिमंत्रैःपृथक्पृथक्सतिल
मुदकंदद्यात् ॥ इत्यवसानांजलिंदद्यात्॥ ततःस्नानवस्त्रप्रांतंनिष्पीडयेत्॥ अत्राहयो
गियाज्ञवल्क्यः॥ वस्त्रनिष्पीडितंतोयंस्नातस्योच्छिष्टभागिनाम् ॥ भागधेयंश्रुतिः
प्राहतस्मान्निष्पीडयेज्जलम् ॥ इति ॥ येकेचास्मत्कुलेजाताअपुत्रागोत्रिणोमृ
ताः ॥ तेगृण्हंतुमयादत्तंवस्त्रनिष्पीडनोदकम् ॥ एवंस्नानवस्त्रंनिष्पीड्यप्रागुद
ग्वातर्पणार्थंकुशान्परित्यज्ययज्ञोपवीतीभूत्वाचम्यजलेब्रह्मादिदेवानावाह्यवक्ष्यमा
णैस्तत्तल्लिंगमंत्रैर्यथासंभवोपचारैश्चंदनाक्षतपुष्पादिभिर्ब्रह्मादिवरुणांतानर्चयेत् ॥

तत्रमंत्राः ॥ ब्रह्मजज्ञानमितिप्रजापतिर्ऋषिरादित्योदेवतात्रिष्टुप्छंदः पूजनेवि
नियोगः ॥ ॐब्रह्मजज्ञानंप्रथमंपुरस्ताद्विशीमतःसुरुचोवेनआवः ॥ सबुध्न्याऽ
उपमाऽअस्यविष्ठाःसतश्चयोनिमसंतश्चविवः ॥ ब्रह्मणेनमः ॥ इदंविष्णुरिति
मेधातिथिर्ऋषिर्विष्णुर्देवतागायत्रीच्छंदःपूजनेविनियोगः ॥ ॐइदंविष्णुर्विचक्र
मेत्रेधानिदंधेपदम् ॥ समूढमस्यपांसुरेस्वाहा ॥ विष्णवेनमः ॥ नमस्तइत्यस्य
परमेष्ठीऋषीरुद्रोदेवतागायत्रीछंदःपूजनेविनियोगः ॥ ॐनमस्तेरुद्रमन्यवउतोतइ
षवेनमः ॥ बाहुभ्यामुततेनमः ॥ रुद्रायनमः ॥ अपांस्पर्शः ॥ तत्सवितुरितिविश्वा ३१
मित्रऋषिःसवितादेवतागायत्रीछंदःपूजनेविनियोगः ॥ ॐतत्सवितुर्वरेण्यंभर्गोदेव

स्यंधीमहि ॥ धियोयोनः प्रचोदयात् ॥ सवित्रेनमः ॥ मित्रस्येत्यस्यविश्वामित्रऋ
षिर्मित्रोदेवतागायत्रीच्छंदः पूजनेविनियोगः ॥ मित्रस्यंचर्षणीधृतोवोदेवस्यसानसी ॥
द्युम्नंचित्रश्रवस्तमं ॥ मित्रायनमः ॥ इमंचइत्यस्यशुनःशेपऋषिर्वरुणोदेवता
गायत्रीछंदः पूजनेविनियोगः ॥ ॐइमंमेवरुणश्रुधीहवमद्याचमृडय ॥ त्वामवस्युराच
के ॥ वरुणायनमः ॥ एवंब्रह्मादीनभ्यर्च्य ॥ अदृश्रमेत्यस्यप्रस्कण्वऋषिःसवितादेव
तागायत्रीच्छंदःसूर्योपस्थानेविनियोगः ॥ ॐअदृश्रमस्यकेतवोविरश्मयोजनाँ२अ
नु ॥ भ्राजंतोअग्नयोयथा ॥ उपयामगृहीतोऽसिसूर्य्यायत्वाभ्राजायैषतेयोनिःसूर्य्याय
त्वाभ्राजाय ॥ सूर्यभ्राजिष्ठभ्राजिष्ठस्त्वंदेवेष्वासिभ्राजिष्ठोहंमनुष्येषुभूयासम् ॥ ६९

ॐहꣳसःशुचिषद्वसुरंतरिक्षसद्धोतावेदिषदतिथिर्दुरोणसत् ॥ नृषद्वरसदृतसद्व्योमसद
ब्जागोजाऋतजाअद्रिजाऋतंबृहत् ॥ ततःसूर्यंप्रदक्षिणीकृत्यसूर्यायनमइतिनमस्कृ
त्यप्राच्यादिदिशस्तद्देवताश्चनमस्कुर्यात् ॥ ॐप्राच्यैदिशेइंद्रायनमः ॥ ॐआग्नेय्यैदि
शेअग्नयेनमः ॥ ॐदक्षिणायैदिशेयमायनम ॥ ॐनैर्ऋत्यैदिशेनिर्ऋतयेनमः ॥ ॐप्र
तीच्यैदिशेवरुणायनमः ॥ ॐवायव्यैदिशेवायवेनमः ॥ ॐउदीच्यैदिशेसोमायनमः॥
सइत्यस्यवामदेवऋषिःसवितादेवताअतिजगतीच्छंदः सूर्योपस्थानेविनियोगः ॥
ॐईशान्यैदिशेईश्वरायनमः ॥ ॐऊर्ध्वायैदिशेब्रम्हणेनमः ॥ ॐअवाच्यैदिशेअनंता
यनमः ॥ इतिनमस्कृत्योपविशेत् ॥ ततउदकांजलिंदद्यात् ॥ ॐब्रह्मणेनमः । ॐ ३२
अग्नयेनमः । ॐपृथिव्यैनमः । ॐओषधीभ्योनमः । ॐवाचेनमः । ॐवाचस्पतये

नमः । ॐविष्णवेनमः । ॐमहद्भ्योनमः । ॐअपांपतयेनमः । ॐवरुणायनमः ॥
एवमुदकंदत्त्वा ॥ संवर्चसेतिमंत्रस्यपरमेष्ठीऋषिस्त्वष्टादेवतात्रिष्टुप्छंदःमुखमार्जने
विनियोगः ॥ ॐसंवर्चसापयसासंतनूभिरगंन्महिमनंसासꣳशिवेनं ॥ त्वष्टांसुदत्रो
विदंधातुरायोनुंमार्ष्टुतन्वोयद्विलिष्टम् ॥ इतिमुखंजलेनमार्जयेत् ॥ देवागातुविति
मंत्रस्यवाचस्पतिर्ऋषिर्वातोदेवताविराट्छंदःकर्मांगदेवताविसर्जनेविनियोगः ॥ ॐ
देवांगातुविदोगातुंवित्त्वागातुमिंत ॥ मनंसस्पतऽइमंदेवयज्ञꣳस्वाहावातेधाः ॥ ए
वंविधिनाजीवत्पितृकेणापिब्रह्मादिचित्रगुप्तपर्यंततर्पणंकृत्वास्वपित्रादितर्पणंवस्त्रनि
ष्पीडनंचवर्जयित्वाब्रह्मार्चनादिस्नानादिकर्मांगभूतदेवताविसर्जनपर्यंततर्पणविधि
र्विधेयः । नाजीवत्पितृकःकुर्याद्वस्त्रनिष्पीडनंबुधः ॥ नजीवत्पितृकःकुर्यात्कृष्णोस्ति

लैश्वतर्पणम् ॥ इतिलौगाक्षिवचनात् । वस्त्रनिष्पीडनंचपर्वादौनभाति । द्वादश्यांपंच
दश्यांसंक्रांतौश्राद्धवासरे । वस्त्रंनिष्पीडयेन्नैवनचक्षारेणयोजयेत् ॥ इतिस्मृतेः
केचनतूत्तरऋषिपितर्पणविधानात्स्नानोत्तरतर्पणमध्येवस्त्रनिष्पडिनंनेच्छंति । यावद्दे
वानृषींश्चैवपितॄंश्चैवनतर्पयेत् ॥ तावन्नपिंडयेद्वस्त्रंयेनस्नातोनवोदके ॥ निष्पीडयाति
यःपूर्वंस्नानवस्त्रमतर्पिते ॥ निराशाः पितरोयांतिशापंदत्त्वासुदारुणम् ॥ इतियोगि
याज्ञवल्क्यस्मरणादनुचितंतर्पणात्प्राग्वस्त्रनिष्पीडनम् । वस्त्रनिष्पीडनंस्नानोत्तरत
र्पणमध्यएवकुर्यादितिहिश्रीदीक्षितकामदेवकृतोत्सर्गकारिकाटिप्पणेप्रतिपादितम् ।
केचित्स्नानकर्मांगभूतदेवनाविसर्जनमंत्रनेच्छंतितदप्ययुक्तम् । किंतुस्नानविधेःक
र्मांगभूतत्वाद्विसर्जनस्यतद्देवताविषयत्वात्सविसर्गस्नानविधिंसमापयादित्येवयुक्तामि
त्यपिश्रीदीक्षितकामदेवकृतोत्सर्गकारिकाटिप्पणेप्रतिपादितम् ॥ एवमुक्तविधिना

नित्यस्नानमाध्यान्हिकसंध्यातर्पणानिसमाप्यवक्ष्यमाणप्रकारेणारुंधती समेतान्गौ
तमादीन्सप्तर्षीन्सप्रवरान्स्थापयेत् ॥ ॥ ६ ॥ ॥ श्रीगणेशायनमः ॥ अथऋषिस्था
पन पूजनप्रकारःकथ्यतेसयथा तत्रकारिका कृत्वादर्भमयान्पीठेस्थापयेदृष्यरुन्धती
म् । प्रवरांश्चततोधीमान्कुर्यात्तेषांप्रतिष्ठितं॥ कारिकार्थः स्थापयेदृष्यरुन्धतीमित्य
त्रतत्रेत्यनुवर्त्ततेतस्मिन्कर्मणिअरुन्धतीसहितांसप्तऋषीन्सप्रवरांश्चकुशमयान्कृत्वा
स्थापयेत् ॥ यदाऋष्यरुन्धतीतिपाठस्तदासमाहारद्वन्द्वैकवद्भावः ततश्चनपुंस
कत्वादीकारस्यन्हस्वताचयदाऋष्यरुन्धतीमितिपाठस्तदाभावेक्तः ततः स्थापनो-
त्तरन्तेषांगे।तमादीनांसप्तर्षीणांमनोजूतिरितिमन्त्रेणप्रतिष्ठांकुर्यादित्यर्थः तथाचरेणु
कारिकाप्रतिष्ठाप्यमनोजूतिमन्त्रंसमुच्चरन्इमावेवेतियजुषानामान्येषांविनिर्दिशेदि
तिकारिकार्थःस्थापनोत्तरंगोतमादिसप्तर्षीणामिमामेवेतियजुषांनाम संकीर्तयेदित्य

र्थंइमावेवेत्यत्रोक्ताएवपूजनीयाः गौतमादीनित्युदाहृतवाक्यात् । अथऋषिस्था
पनक्रमः कर्त्तापूर्वंत्रिभिस्त्रिभिर्दर्भपवित्रैः पृथक्पृथक्गायत्रीपठित्वाब्रह्म
ग्रन्थियुक्ता सप्तर्षिबटवःकार्यास्ततः पीठे नवंसदशंधौतवस्त्रंप्रसार्यतस्मिन्प्रागग्राः
स्थापनीयाःततआचम्य प्राणायामान्कृत्वाकुशकुसुमयवजलपाणिर्देशकालौसङ्की
र्त्याध्यायोत्सर्गकर्माङ्गत्वेनऋषिस्थापनपूजनमहंकरिष्ये । इतिसंकल्पंकुर्यात् ।
ततअक्षतान्गृहीत्वाॐभूर्भुवःस्वः गौतममावाहयामिस्थापयामिभोगोतमइहाग
च्छेहतिष्ठ ॐभूर्भुवःस्वःभारद्वाजमावाहयामिस्थापयामिभोभरद्वाजइहागच्छेहति
ष्ठॐभूर्भुवःस्वःविश्वामित्रमावाहयामिस्थापयामिभोविश्वामित्रइहागच्छेहतिष्ठ ॐ
भूर्भुवःस्वःजमदग्निमावाहयामिस्थापयामिभोजमदग्नेइहागच्छेहतिष्ठ ॐभूर्भुवःस्वः
वासिष्ठमावाहयामि स्थापयामिभोवसिष्ठइहागच्छेहतिष्ठॐभूसुर्वःस्वःकश्यपमावा

हयामि भोकश्यपइहागच्छेहतिष्ठ ॐभुर्भूवः स्वः अत्रिमावाहयामिस्थापयामिभोअत्रे
इहागच्छेहातिष्ठॐभूर्भुवः स्वः अरुन्धतीमावाहयामि स्थापयामिभोअरुंधातिइहाग
च्छेहतिष्ठ एवंसप्तऋषीनावाह्यस्थापयित्वाऽक्षतानादायमनोजूतिरितिमन्त्रेणप्रति
ष्ठांकुर्यात् ॥ ॐमनोजूतिरित्यस्यांगिसोबृह स्पतिर्ऋषिर्यजुर्विश्वेदेवादेवताऋषिस्था
पनेविनियोगः । ॐमनोजूतिर्जुषतामाज्जास्यबृहस्पतिर्य्यज्ञमिमन्तंनोत्वरिष्टंयज्ञ ँ
समिमन्दंधातु ॥ विश्वेदेवासंऽइहमादयन्तामों३प्रतिष्ठ ॥ १ ॥ अरुन्धतीसाहिताः
सप्तऋषयः सुप्रतिष्ठिताभवंतिवित्युच्चार्याक्षतान्प्राक्षिपेत् । एवंप्रतिष्ठाप्यसप्तर्षयइदं
विष्णुर्विचक्रमेइतिमन्त्राभ्यांषोडशोपचारैः सप्तऋषीनर्च्चयेत् ॥ तत्रकारिका अ
द्भिस्तान्स्नापयेद्विप्रान्सप्तऋषयइत्यृचा ॥ अर्घस्तेभ्यः प्रदातव्यः पूजनंचन्दनादि

भिः ॥ १ ॥ नैवेद्यैर्विविधैः पूजा वेदस्य हितमिच्छता ॥ ऋषीणां प्रीतये दद्या
दुपवीतान्यनेकशः ॥ २ ॥ प्रणम्य च मुनीन् भक्त्या तर्पणं च समारभेत् ॥ ३ ॥
कारिकार्थः अद्भिस्तानिति तीर्थोदकैस्तान्विष्णुरूपान् सप्तर्षीन् स्नापयेदि
त्यर्थः ॥ तथा रेणुकारिका ॥ मन्त्राभ्यां सप्त ऋषय इदं विष्णुर्विचक्रमे ॥ अर्चयेद्विष्णुरू
पांस्तान् गन्धाद्यैः सोपवीतकैरिति ॥ अघस्तेभ्य इति वेदस्य हितमिच्छता पुंसा तेभ्यः
सप्तर्षिभ्यः ॥ अष्टांगोऽर्घः प्रदातव्यः गन्धादिभिरुपचारैस्ते पूज्याः बहुप्रकारैर्नैवेद्यैस्ते प्री
णनीयाः ऋषीणां प्रीतये दद्यादिति ऋषीणां प्रीत्यर्थं बहूनि ब्रह्मसूत्राणि समर्पयेदित्यर्थः
तथा च मदनरत्ने यज्ञोपवीतदानेन ब्रह्मवर्चस्वी जायते ॥ तस्मात्तानि प्रदेयानि ब्राह्मणे
भ्यो विपश्चिता ॥ नन्दिपुराणे । यज्ञोपवीतदानेन सुरेभ्यो ब्राह्मणाय वा । भवेद्विप्रश्च तु
वेदः शुद्धधीर्नात्र संशयः ॥ प्रणम्याति प्रेम्णा मुनीन्सप्तर्षीन्नमस्कृत्य पूजनोत्तरमृषींस्तर्प

येदित्यर्थः ॥ अथऋषिपूजनक्रमः ॥ समाचारात्पूजनात्पूर्वंकर्त्ता सप्तऋषयइदं
विष्णुर्विचक्रमइतिमन्त्राभ्यांकरादिमूर्द्धपर्यन्तंदेहेन्यासान् कुर्यात् तेयथा सप्तऋ
षयइत्यस्यादित्ययाज्ञवल्क्यावृषीसप्तऋषयो देवताजगतीछन्दः इदंविष्णुरित्यस्यमे
धातिथिर्ऋषिर्विष्णुर्देवताङ्गन्यासेविनियोगः ॥ ॐसप्तऽऋषयःप्रतिंहिताःशरीरेस
प्तरक्षन्तिसदमपप्रंयादम् ॥ सप्तापःस्वपतोलोकमीयुस्तत्रंजागृतोऽअस्वप्नजोसत्रस
दौचदेवौ ॥ १ ॥ ॐइदंविष्णुर्विचंक्रमेत्रेधानिदंधेपदम् ॥ समूंढमस्यपां
सुरेस्वाहा ॥ २ ॥ इतिवामकरे ॥ ॐसप्तऋषयः ० ॐइदंविष्णुर्विचंक्रमेत्रेधा
निदंधेपदम् । समूंढमस्यपांसुरेस्वाहा ॥ दक्षिणकरे ॥ ॐसप्तऋषंयः० इदंविष्णु
र्विचंक्रमे०वामपादे ॥ ॐसप्तऋषंयः०इदंविष्णु० दक्षिणपादे ॥ ॐसप्तऋषंयः०

इदंविष्णु॰वामजानौ ॥ ॐसप्तऋषंय॰इदंविष्णु॰दक्षिणजानौ ॥ ॐसप्तऋषंय॰इदंवि॰वामकट्याम् ॥ ॐसप्तऋषं॰इदंवि॰दक्षिणकट्याम् ॥ ॐसप्तऋषंय॰इदंविष्णुवि॰नाभौ ॥ ॐसप्तऋ॰इदंविष्णु॰हृदये ॥ ॐसप्त॰इदंवि॰कंठे ॥ ॐ सप्तऋषंय॰इदंवि॰वामबाहौ ॥ ॐसप्तऋषंय॰इदंविष्णु॰ दक्षिणबाहौ ॥ ॐ सप्तऋषं॰इदंवि॰मुखे ॥ ॐसप्तऋषं॰इदंवि॰नेत्रयोः ॥ ॐसप्तऋषंय॰इदंवि॰ मूर्ध्नि ॥ इतिस्वांगन्यासान्विधाय ॥ तथैवसप्तर्षिबद्रुषुन्यासान्कुयात ॥ ततः सप्तऋषयइदंविष्णुर्विचक्रमेइतिमन्त्राभ्यांकाण्डानुसमयेनगौतमादीन्पूजयेत् तत्रैवंप्रयोगः गौतमायासनंसमर्पयामिएवंपाद्यमर्घ्यमाचमनीयस्नानयज्ञोपवीतादि स्तुतिपाठान्तंगौतमंसंपूज्य भरद्वाजादीन्पूजयेदेवमेवअथवापदार्थानुसमयेन गौत

मादीन्पूजयेत्तत्रैवंप्रयोगः॥ ॥अथऋुषिपूजनम्॥सप्तर्षीणांपूजनं च तथा स्थापनमपृ
थक्॥ प्रतिष्ठावाहनंचैव कालज्ञानंतथैवच ॥ पूजोपवीतिदानंस्यात्प्राचीनावीतिपूर्वक
म् ॥ १ ॥ उत्सर्गःपितरश्चैवआचान्तोवंशएवच ॥ तत्सवितुरित्यारभ्यसावित्र्या
ब्रुवणंचतुः ॥ २ वीरतास्मइतिसकृदध्यायादीन्पठेत्तदा ॥ ३ ॥ तदेतदृचाभ्युक्तंनम
स्कारोविसर्जनम् ॥ समुद्रेतिजलेप्राश्यद्विराचान्तोगृहंव्रजेत् ॥ ४ ॥ द्यौःशान्तिरन्त
रिक्षꣳशान्तिःपृथिवीशान्तिःपरापःशान्तिरोषधयःशांतिः ॥ वनस्पतयःशान्ति
र्विश्वेदेवाः शान्तिर्ब्रह्मशान्तिःसर्वꣳशान्तिःशान्तिरेवशान्तिः सामाशान्ति
रेधि ॥ १ ॥ यतोयतःसमीहसेततोनोऽअभयंकुरु ॥ शन्नःकुरुप्रजाभ्योभयन्नःप
शुभ्यः ॥ २ ॥ शान्तिपाठं पठन्तोऽपामार्गश्रितैस्त्रिभिर्दर्भपवित्रैःसप्तऋषीन् स्वप्रव

रसंख्याकान्स्वऋषींश्चसावित्र्यादत्तब्रह्मग्रन्थीन्कुर्युः ॥ कश्यपोथभरद्वाजओंगि
रागौतमोमुनिः ॥ वत्सः पराशरश्चेतिमाण्डव्यः सप्तमस्तथा ॥ ततोवस्त्रंप्रसार्यतदुप
रिप्रागग्रानुदगग्रान्वासप्तर्षीन्स्थापयेत् ॥ अरुन्धतीसहितानितिकेचित् ॥ तथैव
स्वान्ऋषीन्गणानपिस्थापयेत ॥ अथप्रतिष्ठापनम् ॥ ॐभूर्वःस्वःकश्यपइहागच्छइ
हतिष्ठ ॥ कश्यपायनमःकश्यपंआवाहयामि ॥ ॐभूर्भुवःस्वः भरद्वाजइहा
गच्छइहतिष्ठ ॥ भरद्वाजायनमःभरद्वाजं आवाहयामि ॥ ॐभूर्भुवःअंगिरःइ
हागच्छइहातिष्ठ ॥ अंगिरसेनमः अंगिरिसआंवाहयाम ॥ ॐभूर्भुवःस्वःगौतमइ
हागच्छइहतिष्ठ ॥ गौतमायनमः गौतमंआवाहयामि ॥ ॐभूर्भुवःस्वः वत्सइहा
गच्छइहतिष्ठ ॥ वत्सा यनमःवत्सआवाहयामि ॥ ॐभूर्भुवःस्वः पराशरइहागच्छइह

तिष्ठ ॥ पराशरायनमः पराशरंआवाहयामि ॥ ॐ भूर्भुवःस्वः माण्डव्यइहागच्छइहति
ष्ठ ॥ माण्डव्यायनमः माण्डव्यंआवाहयामि ॥ ॐ भूर्भुवःस्वः अरुन्धतिइहागच्छइह
तिष्ठ ॥ अरुन्धत्यैनमः अरुन्धतींआवाहयामि ॥ ॐ मनोजूतिर्जुषतामाज्यस्यबृह
स्पतिर्यज्ञमिमन्तनोत्वरिष्टंयज्ञꣳसमिमन्दधातु ॥ विश्वेदेवासऽइहमादयन्तामों ३ प्र
तिष्ठ ॥ १ ॥ एषवैप्रतिष्ठानामयज्ञोयत्रैतेनयज्ञेनयजन्तेसर्वमेवप्रतिष्ठितम्भव
ति ॥ २ ॥ अरुन्धतीसहितसप्तर्षिस्वर्षयः सुप्रतिष्ठितावरदाभवन्तु ॥ सप्तऽ
ऋषयः प्रतिहिताः शरीरेसप्तरक्षन्तिसदमप्रमादम् ॥ सप्तापःस्वपतोलोकमीयुस्त
त्रजागृतोऽअस्वप्नजौसत्रसदौचदेवौ ॥ ३ ॥ इदंविष्णुर्विचक्रमेत्रेधानिदधेपद
म् ॥ समूढमस्यपाꣳसुरे० ॥ इमावेवगौतमभरद्वाजावयमेवगौतमोऽयंभरद्वाज

इमावेववविश्वामित्रजमदग्नीऽ अयमेववविश्वामित्रोयंजमदग्निरिमावेववसिष्ठकश्यपाव
यमेववसिष्ठोयं कश्यपोवागेवात्रिर्वाचाह्यंनमद्यतेतिर्हवैनामैतद्यदत्रिरिति सर्वस्यात्ता
भवतिसर्वमस्यान्नंभवतियऽएवंवेद ॥ १ ॥ इतिमन्त्रेणसर्वैःप्रार्थनाकार्या ऋषीन्वि
ष्णुस्वरूपान्ध्यात्वा ॥ ततःसर्वेआचम्य त्रिस्त्रिःप्राणानायम्य देशकालौसङ्कीर्त्य
अध्यायोत्सर्गोपाकर्म्माङ्गभूतंऋषिपूनमहंकरिष्ये इतिआसनादिविधाय ॥
सुवर्णघटितंद्रव्यंनानारत्नसमन्वितम् ॥ आसनंरुचिरंयच्चगृह्यतांभोमुनीश्वराः ॥
सप्तऋषिभ्योनमः अथवाअरुन्धत्यासहसप्तऋषिभ्यःस्वर्षिभ्योनमः इदमासनंस-
मर्पयामि ॥ गङ्गाजलंसमानीतंगन्धद्रव्येणसंयुतं ॥ पाद्यार्घ्यंप्रतिगृण्हन्तुकश्यपा
द्यामहर्षयः ॥ अरुं॰पाद्यंस॰ ॥ सुवर्णपात्रसंयुक्तंगन्धपुष्पाक्षतैर्युतम् ॥ सप्तर्षयः

प्रगृण्हन्तुअर्घ्यंदत्तंमयाकृतं ॥ अरुं० अर्घ्यंसमर्पयामि ॥ कर्पूरवासितंतोयंसुवर्ण
कलशेस्थितम् ॥ दत्तमाचमनीयंचऋषीणांप्रीतयेसदा ॥ अरुं० आचमनीयंस० ॥
ततःमधुपर्कंसमर्पयामि ॥ पञ्चामृतमंत्रैःपञ्चामृतंसमर्पयामि ॥ आपोहिष्ठेतिशुद्धो
दकस्नानं ॥ सुगन्धद्रव्यसंयुक्तंपवित्रंमण्डलंजलं ॥ स्नानार्थंवःसमानीतंमुनयःप्रति
गृह्यताम् अरुं० इदंस्नानीयंस० ॥ सूक्ष्माण्यतीवशुभ्राणिवस्त्राणिविविधानिच ॥
ऋषयःप्रतिगृण्हन्तुअग्निधौतोत्तरीयकैः ॥ अरुं० वस्त्रंस० ॥ नानामन्त्रैःसमुद्धृ
तंकार्पासंब्रह्मसूत्रकं ॥ प्रत्येकंदीयतेस्वच्छमृषयः प्रतिगृह्यताम् ॥ अरुंध०
ऋषिभ्यःप्रत्येकमिदंयज्ञोपवीतंमम० ॥ आत्मसन्तापहारंचसुगंधद्रव्यसंयुतं ॥
चंदनंतत्प्रयच्छामिऋषीणांप्रीतयेसदा ॥ अरुं० चंदनंस० ॥ शुभ्रतंदुलजाःशुभ्राःशं

स्वशुभ्रामनोरमाः ॥ अक्षतार्थंप्रयच्छामितान्गृण्हन्तुमुनीश्वराः ॥ अरुं० अक्षतान्स
म० ॥ शतपत्रंजातिपुष्पंमल्लिकाकुसुमंतथा ॥ पूजार्थंवोमयाभक्त्यामुनीनांविदुषां
सदा ॥ अरुं० पुष्पाणिसम० ॥ तुलसीपत्राणिबिल्वपत्राणिचसमर्पयामि ॥ कृष्णागरु
र्गुग्गुलोयंसुगन्धश्चदशाङ्गकः ॥ धूपोयंकश्यपादिभ्योदीयतेप्रीतयेधुना ॥ अरुं० धू
पंस० ॥ पद्मवर्त्तिसमायुक्तंसर्वमंगलशोभनम् ॥ दत्तंनीराजनंतेभ्योदीपोऽयंप्रतिगृह्य
ताम् ॥ अरुं० दीपंस० ॥ स्वादून्यन्नानिसर्वाणिसदिव्यव्यञ्जनानिच ॥ शर्कराघृतसं
युक्तंनैवेद्यंदीयतेमया ॥ अरुं० नैवेद्यंस० ॥ ऊष्णोदकंशुद्धिकरंक्षालितंकृतमुत्तमम् ॥
गृण्हन्तुमुनयः सर्वेप्रीयेयान्तुमेसदा ॥ अरुं० इदमाचमनीयंस० ॥ नारिकेलंचकूष्मा
ण्डंकदलीकर्कटीफलम् ॥ ऋतुदेशोद्भवंचान्यंदीयतेद्यमुनीश्वराः ॥ अरुं० फलंस० ॥

पूगीफलंसकर्पूरंनागवल्लीदलैर्युतम् ॥ कर्पूररससंयुक्तताम्बूलंप्रतिगृह्यताम् ॥ अरुं०
ताम्बूलंस० ॥ अरुं०हिरण्यदक्षिणांस० ॥ ब्रह्मिष्ठाब्रह्मरूपाश्चकश्यपाद्यामहर्षयः ॥ ब्र
ह्मप्रज्ञादिदातारःसन्तुमेकीर्तिकर्माणि ॥ अरुंध०नीरांजनदीपंस० ॥ यज्ञेनयज्ञेतिमंत्रपु
ष्पाञ्जलिंसमर्पयामि ॥ अरुंधत्यासहकश्यपादिऋषिभ्यःभ्र्वर्षिभ्यश्चेदमनुलेपनं ॥ ए
ताः सुमनसएषधूपइयंज्योतिरिदंनैवेद्यमिदमाच्छादनमिमानियज्ञोपवीतानिअमृत
रूपेणस्वाहासम्पद्यन्ताम् ॥ कश्यपादिपूजनविधेर्न्यूनातिरिक्तोयोविधिःससर्वःपरि
पूर्णोऽस्तु॥सर्वेसुप्रसन्नावरदाभवन्तु ॥ ततःस्वपितृभ्योयज्ञोपवीतानिदद्यात् ॥ प्राची
नावीती ॥ दक्षिणाभिमुखोभूत्वासर्वेकुशोदकंगृहीत्वापुरतोयज्ञोपवीतानिनिधाय ॥
अ०गो०भ्यःअस्म०पि०पि०महेभ्यःतथाद्वि०गो० भ्यःअस्म०मा०म०प्र०म०वृ०

यजुः प्रमा० महेभ्यःअन्येभ्यः कव्यवाडनलादिदिव्यपितृभ्यइमानियज्ञोपवीतानिस्वाहा। श्रा०प्र०
सम्पद्यन्तांस्वधासम्पद्यन्तामितिवा॥ जीवतिपितृकैरपिपितुःपित्रादिभ्योमातामहादि
४० भ्योयज्ञोपवीतानिदेयानि ॥ ततःसयंकृत्वासर्वेषांब्राह्मणानांगन्धादिदक्षिणापर्यन्तं
दत्त्वातेभ्योयज्ञोपवीतानिदद्युः॥ अस्मिन्कालेयज्ञोपवीतधारणंसर्वैःकर्त्तव्यम् ॥ त
दुक्तं॥ उपाकर्मेमृतकान्तेचातुर्मास्येगतेऽपिवा ॥ नवंयज्ञोपवीतंचधारयेज्जीर्णंकंत्य
जेत्॥ अन्यच्च । उपाकर्मणिचोत्सर्गेगतेमासचतुष्टये ॥ नवयज्ञोपवीतानिधृत्वा
पूर्वाणिसंत्यजेत्॥ पूर्वयज्ञोपवीतानिशिरोमार्गेणानिःसार्यउदकेप्रक्षेपः॥ जीर्णयज्ञोप ४०
वीतानिशिरोमार्गेणसंत्यजेदिति संग्रहोक्तेः ॥ आचम्यप्राणानायम्यदेशकालौसंकी
र्त्याद्यपुण्यतिथौममश्रौतस्मार्तकर्मानुष्ठानसिद्धिद्वारा श्रीपरमेश्वरप्रीत्यर्थंनूतनय

ज्ञोपवीतधारणमहंकरिष्ये ॥ तदङ्गत्वेनयज्ञोपवीताभिमन्त्रणंकरिष्ये ॥ यज्ञोप
वीतंहस्ताभ्यांगृहीत्वागायत्र्यासकृदभिमन्त्र्य ॥ ब्रह्मजज्ञानमितिसकृत् आपोहिष्ठे
तितिसृभिः पुनन्तुमेतिनवभिर्मार्जनम् ॥ पवित्रेस्थोवैष्णव्यौइतिपठित्वा ॥ ॐ
तत्सवितुरादिना ॐकारंप्रथमतन्तुंन्यसामि ॥ ॐअग्निंद्वितीयतन्तुंन्यसामि ॥
ॐनागान्तृतीयतन्तुंन्यसामि ॥ ॐसोमंचतुर्थ० ॥ ॐपितॄनपञ्चमतं० ॥ ॐ
प्रजापतिंषष्ठतं०॥ ॐवायुंसप्तमतं० ॥ ॐसूर्यंअष्टमतं० ॥ ॐविश्वान्देवान्नवम ॥
ॐयजुर्वेदंप्रथमदोरकन्यं० ॥ ॐऋग्वेदंद्वितीयदो० ॥ ॐसामवेदंतृतीयदो०॥ ॐ
अथर्ववेदंग्रार्थिन्य०॥ ग्रन्थौब्रह्मविष्णुमहेश्वरेभ्योनमः ॥ उद्वयंतमितिसूर्यायदर्शयेत
त्रिस्ताडनम् ॥ दशगायत्र्याभिमन्त्र्य ॥ यज्ञोपवीतमितिमन्त्रस्यपरमेष्ठिऋषिः
त्रिष्टुप्छन्दःलिङ्गोक्तादेवतायज्ञोपवीतधारणेविनियोगः ॥ ॐयज्ञोपवीतंपरमंपवित्रं

प्रजापतेर्यत्सहजंपुरस्तात् ॥ आयुष्यमग्र्यंप्रतिमुञ्चशुभ्रंयज्ञोपवीतंबलमस्तुतेजः ॥
यज्ञोपवीतमसियज्ञस्यत्त्वायज्ञोपवीतेनोपनह्यामिइतिपृथक्पृथक्मन्त्रेणधृत्वाआच
मनंकुर्यात् ॥ एवंद्वितीयंतृतीयमपिधार्यं ॥ यज्ञोपवीतंयदिजीर्णभूतंवेदान्तानित्यंप
रब्रह्मसूत्रम् ॥ आयुष्यमग्र्यंप्रतिमुञ्चशुभ्रंयज्ञोपवीतञ्चविसर्जनीयम् ॥ यज्ञोपवीते
द्वेधार्येश्रौते स्मार्तेचकर्मणि ॥ तृतीयमुत्तरीयार्थंवस्त्राभावेचतुर्थकम् ॥ अथपूर्ववत्तर्पणं
कुशैः सऋषितर्पणकुशानेकीकृत्याचम्यप्राणानायम्यदेशकालौसङ्कीर्त्य ॥ अन
ध्यायादिषुअशुचित्वेनअनधिकारिभिः शूद्रादिभिःश्रूयमाणत्वेनकृतस्याध्ययन
स्यमालिन्यस्यापसर्गनिवृत्तयेयजुर्वेदांतर्गतमाध्यन्दिनशाखाध्यायिनश्छन्दसामु
त्सर्गाख्यतर्पणंकरिष्यामहे ॥ इतिसंकल्पः ॥ गौतमायपाद्यं एवंभरद्वाजादिभ्यउ
पचाराःततःसमाचारात्स्वस्वप्रवरान्पञ्चोपचारैः पूजयेत । ततःसप्तऋषींस्तर्पयेत

तत्रगृह्यसूत्रं अद्भिर्देवांश्छन्दाꣳसिवेदानृषीन्पुराणाचार्यान्गन्धर्वानितराचार्यान्सं
वत्सरंचसावयवंपितॄनाचार्यानिति सूत्रार्थः ॥शिष्यगणैःसहाचार्योदेवादींस्तर्पयेत् ॥
तथाचकारिका ॥ देवांश्छंदांसिवेदांश्चसनातनानृषींस्तथा ॥ तथापुराणाचार्यांश्चग
न्धर्वानितरांस्तथा ॥६॥ अहोरात्रार्द्धमासांश्चमासानृतूंस्तथैवच ॥ संवत्सरंसावयवं
स्वान्पितॄंस्तर्पयेदथ ॥ ७ ॥ आचार्यतर्पणैःसार्द्धमयम्पुरश्चपञ्चभिः ॥ मन्त्रैर्द्वाभ्यां
चमूर्द्धेतिमातृकाभ्रितयेनच ॥ ८ ॥ एवंषोडशभिर्मन्त्रैःसप्तऋषयएकया ॥ चतुर्भि
स्तर्पयेदंशैरिमावेवेत्यनेनचेति ॥ ॥ कारिकार्थः ॥ ॥ देवानितिआचार्यशिष्यादे
वांश्छन्दांसीत्यादिना॥पितॄनाचार्यानित्यंतान् सूत्रोक्तदेवांस्तर्पयेयुरित्यर्थः ॥ अथे
तिसूत्रोक्तदेवतातर्पणानन्तरमयंपुरइत्यादिमामेवेत्यंतेनयजुषामन्त्रोक्तदेवतास्तर्प
येयुरित्यर्थः ॥ ॥ तथाच कात्यायनः ॥ ॥ गौतमादीनृषीन्सप्तकृत्वादर्भमयान्

पुनः।पूजयित्वाविधानेनतर्पयेदृचमुच्चरान्निति॥ ऋग्ग्रहणंयजुरादीनामप्युपलक्षणार्थं
अतएवकारिकाकारेणमाच्छंदइत्यादीनियजूंष्युक्तानिआचार्य।शिष्याः स्वपित्रादीं
स्तर्पयेयुः तत्रसूत्रंस्वांश्चतर्पयेयुरितितथाचकारिकास्वान्पितॄंस्तर्पयेदथोंते अथेत्यन
न्तरंसूत्राविहिततर्पणानन्तरामित्यर्थः आचार्यतर्पणैःसार्द्धमितिदेवादितर्पणैःसहाचा
र्यंतर्पयेत्तन्पूर्वतर्पणवत्पितृतर्पणोत्तरामित्यर्थः ततआचार्यशिष्याअयंपुरइत्यादिप
ञ्चभिर्मूर्द्धेत्यादिद्वाभ्यांमाच्छंदइत्यादित्रिभिरेवश्छन्दइत्यादिषोडशभिः सप्तऋषय
इत्येकयाअव्वश्छशःसमानमासांजीवीत्यादिचतुर्भिर्वंशपाठैरिमावेवेत्येकेनयजुषादेव
तीर्थेनऋषींस्तर्पयेयुःततःस्वपित्रादित्रींस्तर्पयेयुः जीवत्पितृकेनदेवाद्याचार्यतर्पणा
न्तंतर्पणंकर्त्तव्यंततः पितृतर्पणंविहायमन्त्रोक्तदेवांस्तर्पयेत ॥ अथऋषितर्पणक्रमः
कृतऋजुकुशोपग्रहाआचार्यशिष्यादेवतीर्थेनापोगृहीत्वाऋषींस्तर्पयेयुः ॐदेवास्तृ

प्यंतांआचार्यास्तृप्यन्तांततः प्राचीनावीतीभूत्वादक्षिणाग्रान्कुशान्धृत्वाञ्जलिनापो
गृहीत्वातिलान्प्राक्षिप्यदक्षिणमुखेनापितृतीर्थेननामगोत्रोच्चारणपूर्वकंब्रह्मयज्ञांगतर्प
णविधिनापित्रादींस्तर्पयेयुःजीवत्पितृकास्तुआप्र कोष्ठात्कृतापसव्यास्तिलामिश्राभि
रद्भिराचार्यस्यपित्रादींस्तर्पयेयुस्तत्रैवंप्रकारःगोत्राआचार्यपितरस्तृप्यध्वंस्वधेति प्र
योगःततोयज्ञोपवीतीभूत्वायंपुरश्चेत्यादिमन्त्रैर्मन्त्रोक्तदेवतास्तर्पयेयुःतर्पणप्रकारःक
र्तापाणौकुशतिलजलान्यादायगोत्राअस्मत्पितृपितामहप्रपितामहा देवदत्तयज्ञदत्त
विष्णुदत्तशर्माणःतृप्यध्वंस्वधाएवंमात्रादिभ्यःमातामहादिभ्योदद्युः अथऋषितर्पणं
अयंपुरआदिपंचानांसाध्याऋषयोयजूंषिप्राणभृतोदेवताःमूर्द्धा दिहृयोर्देवाऋषयो य
जूंषिलिङ्गोक्तादेवताःएवरछन्दआ दिषोडशानांपरमेष्ठिर्ऋषिर्यजूंषिलिङ्गोक्तादेवताऋ
षितर्पणेविनियोगः॥सप्तऋषयइत्यस्याादित्ययाज्ञवल्क्याद्दृषीसप्तऋषयोदेवताजगती

च्छन्दः ऋषितर्पणेविनियोगः ॐ अयंपुरोभुवस्तस्यंप्राणोभौवायनो व्वसन्तंःप्राणाय
नोगायत्रीव्वासन्तीगायत्र्यैगायत्रङ्गायत्रादुपाꣳशुरुपाꣳशोस्त्रिवृत्त्रिवृतोरथन्तरँव्व
सिष्ठऽऋषिः प्रजापतिगृहीतयात्वयाप्राणङ्गृण्हामिप्रजाभ्यः॥ १॥ अयंदक्षिणाव्विश्वक
र्म्मातस्यमनोव्वैश्वकर्मणङ्ग्रीष्मो मानसस्त्रिष्टुब्ग्रैष्मीत्रिष्टुभः स्वारꣳस्वारादन्तर्य्या
मोतर्यामात्पञ्चदशः पञ्चदशाद्बृहद्भरद्वाजऽऋषिः प्रजापतिगृहीतयात्वयामनोगृण्हामि
प्रजाभ्यः।२। अयंपश्चात्॥ अयंपश्चाद्विश्वव्यचास्तस्यचक्षुर्वैश्वव्यचसंव्वर्षाश्चाक्षुष्यो
जगतीवार्षीजगत्याऽऋक्समम्मृक्समाच्छुक्रः शुक्रात्सप्तदशः सप्तदशाद्वैरूपंजमदग्निरृ
षिः प्रजापतिगृहीतयात्वयाचक्षुर्गृण्हामिप्रजाभ्यः।३। इदमुत्तरात्स्वस्तस्यश्रोत्रंꣳसौव ४३

शरच्छ्रौस्यनुष्टुप्शारद्यनुष्टुभंऽऐडमैडान्मन्थीमान्थिनएकविꣳशऽएकविꣳशौवैराजंवि
श्वामित्रऋषिः प्रजापतिगृहीतयात्वयाश्रोत्रंगृह्णामिप्रजाभ्यः॥४॥ इयमुपरिमतिस्त
स्यैवाङ्मात्याहेमन्तोवाच्यःपङ्क्तिर्हैमन्तीपङ्क्त्यैनिधनवन्निधनवतऽआग्रयणऽ आ
ग्रयणात्त्रिणवत्रयस्त्रिꣳशौत्रिणवत्रयस्त्रिꣳशाभ्याꣳशाक्वररैवतेविश्वकर्मऽऋषिः प्रजा
पतिगृहीतयात्वयावाचंगृह्णामिप्रजाभ्योलोकन्ताऽइन्द्रम् ॥५॥ लोकम्पृणच्छिद्रम्पृ
णाथोसीदध्रुवात्वम्॥इन्द्राग्नीत्त्वाबृहस्पतिरस्मिन्योनावसीषदन्॥६॥ताअस्यसूददो
हसꣳसोमꣳश्रीणन्तिपृश्नयः ॥ जन्मन्देवानांविशस्त्रिष्वारोचनेदिवः ॥ ७ ॥ इन्द्र
विश्वाऽअवीवृधन्त्समुद्रव्यचसङ्गिरः ॥ रथीतमꣳरथीनांवाजानाꣳसत्पतिम्पति

म्॥८॥मू॒र्द्धा॑व्वय॑÷प्र॒जाप॑ति॒च्छन्द॑÷क्ष॒त्रव्वयो॒मय॑न्द॒ञ्छन्दो॑व्विष्ट॒म्भो व्वयो॒धि॑प॒तिश्छ
न्दो॑व्वि॒श्वक॑र्म्मा॒व्वय॑÷पर॒मेष्ठी॑च्छन्दो॑व॒स्तो॑व्व॒यो॒व्विवल॒ञ्छन्दो॑व्वृ॒ष्णिर्व्वयो॑व्वि॒शाल
ञ्छन्द॑ऽपु॒रु॑षो॒व्वय॑स्त॒न्द्रञ्छन्दो॑व्या॒घ्रोव्वयो॒ना॑धृ॒ष्टञ्छन्द॑÷सि॒ꣳहो॒व्वय॑श्छ॒दिश्छन्द॑÷प
ष्ठ॒वाड्व॒यो॑बृह॒तच्छन्द॑उ॒क्षाव्वय॑÷क॒कुप्छन्द॑ऽऋष॒भोव्वय॑÷स॒तोबृ॑ह॒तीच्छन्दो॑न॒ड्वान्व
य॑÷॥९॥अ॒न॒ड्वान्वय॑÷प॒ङ्क्तिच्छन्दो॑धे॒नुर्व्वयो॒जग॑ती॒च्छन्द॒स्त्र्यवि॒र्व्वय॑स्त्रि॒ष्टुप्छन्दो॑दि॒त्य॒
वाड्व॒यो॑व्वि॒राट्छन्द॑ऽप॒ञ्चावि॒र्व्वयो॑गाय॒त्रीच्छन्द॑स्त्रि॒व॒त्सोव्वय॑ऽउ॒ष्णिक्छन्द॑स्तु॒र्य्यवा॒
ड्वयो॑नु॒ष्टुप्छन्दो॑लो॒कन्ता॑ऽइन्द्र॑म्॥१०॥मा॒च्छन्द॑÷प्र॒माच्छन्द॑÷प्र॒ति॒माच्छन्दो॑ऽआस्री॒
न्वय॒श्छन्द॑÷प॒ङ्क्तिश्छन्द॑ऽउ॒ष्णिक्छन्दो॑बृह॒स्पतीच्छन्दो॑नु॒ष्टुप्छन्दो॑वि॒राट्छन्दो॑गाय॒

त्रीच्छन्दंस्त्रिष्टुप्छन्दोजगतीच्छन्दः॥११॥ पृथिवीच्छन्दोन्तरिंक्षञ्छन्दोद्यौश्छन्दः
समाश्छन्दोनक्षत्राणिच्छन्दोव्वाक्छन्दोमनश्छन्दः कृषिश्छन्दोहिरण्यञ्छन्दो गौ
श्छन्दोजाच्छन्दोश्वश्छन्दः॥१२॥अग्निर्देवतावातोदेवतासूर्योदेवताचन्द्रमादेवता
व्वसवोदेवतारुद्रादेवतादित्यादेवतामरुतोदेवताव्विश्वेदेवादेवताबृहस्पतिर्देवतेन्द्रोदे
वतावरुणोदेवता॥१३॥एवश्छन्दोव्वरिवश्छन्दःशम्भूश्छन्दःपरिभूश्छन्दऽआच्छ
श्छन्दोमनश्छन्दोव्यचश्छन्दःसिन्धुश्छन्दःसमुद्रश्छन्दःसरिरञ्छन्दःककुप्छन्दस्त्रि
ककुप्छन्दःकाव्यश्छन्दोऽअङ्कुपञ्छन्दोक्षरपंक्तिश्छन्दःपदपंक्तिश्छन्दोव्विष्टारपं
क्तिश्छन्दःक्षुरोभ्रजश्छन्दऽआच्छच्छन्दः ॥ १४ ॥ आच्छच्छन्दःप्रच्छच्छ

न्दः॑सं॒यच्छन्दो॑व्वि॒यच्छान्दो॑बृ॒हच्छन्दो॑रथन्त॒रञ्छन्दो॑निका॒यश्छन्दो॑ व्वि॒वधश्छ
न्दो॑गि॒रश्छन्दो॒भ्रज॒श्छन्दः॑स॒ꣳस्तु॒पछन्दो॑नु॒ष्टुप्छन्द॒ऽए॒वश्छन्दो॒व्वरि॑व॒श्छन्दो॒व्वय॒
श्छन्दो॑व्वय॒स्कृच्छन्दो॒व्विष्पर्द्धा॒श्छन्दो॑विशा॒लञ्छन्दश्छ॒दिश्छन्दो॑दूरोह॒णं छन्दस्त॒
न्द्रञ्छन्दो॑ऽअङ्का॒ङ्कञ्छन्दः॑ ॥ १९ ॥ र॒श्मिना॑स॒त्याय॑स॒त्यञ्जि॑न्न॒व॒प्रेति॑ना॒धर्म्म॑णा॒
धर्म॑ञ्जि॒न्वान्वि॑त्यादि॒वादि॒वं॑ञ्जि॑न्व॒स॒न्धिना॒न्तरि॑क्षेणा॒न्तरि॑क्ष॒ञ्जि॑न्वप्र॒ति॒धिना॑पृथि॒व्या पृ॒
थि॒वीञ्जि॑न्वव्वि॒ष्टम्भे॒न॒ वृष्ट्या॒वृष्टि॑ञ्जि॒न्वप्र॒वयान्हाहर्ज्जि॑न्वानु॒या रात्र्या॒रात्री॑ञ्जि॒न्वो॒शि
जा॒व॒सु॒भ्यो॒व्वसू॒ञ्जि॒न्वप्प्र॒के॒तेना॑दि॒त्येभ्य॑ऽआदि॒त्याञ्जि॑न्व॒तंतु॒नारा॒यः ॥ १६ ॥ तंतु॒
नारा॒यस्पोषे॑ण रा॒यस्पोष॑ञ्जि॒न्वस॒ꣳस॒र्प्पेण॑श्रु॒ताय॑ श्रु॒तञ्जि॑न्वैडे॒नौष॑धीभि॒रोष॑धीर्ज्जि

द्ध्वोत्तमेनन्तनूभिस्तनूर्ज्जिन्न्वव्वयोधसाधीतेनाधीतञ्जिन्वाभिजितातेजसातेजोजिन्न्व
॥ १७ ॥ प्रतिपदसिप्प्रतिपदेत्वानुपदस्यनुपदेत्वासम्पदसिसम्पदेत्वातेजोसितेजसे
त्वात्रिवृदसि ॥ १८ ॥ त्रिवृदसित्रिवृतेत्त्वाप्रवृदसिप्प्रवृतेत्त्वाव्विवृदसि विवृते
त्त्वासवृदसिसवृतेत्त्वाक्क्रमोस्याक्क्रमायत्त्वासंक्क्रमोसिसंक्क्रमाय त्त्वोत्क्क्रमोस्युत्क्क्रमाय
त्त्वोत्क्क्रान्तिरस्युत्क्क्रान्त्यैत्त्वाधिपतिनोर्ज्ज्योर्ज्जञ्जिन्न्व ॥ १९ ॥ राज्ञ्यसिप्प्राची
दिग्वसवस्तेदेवाऽअधिपतयोग्निर्हेतीनाम्प्रतिधर्ता त्रिवृत्त्वास्तोमःपृथिव्याᳫंश्रय
त्त्वाज्ज्यमुक्क्थमव्यथायैस्तभ्नातुरथन्तरᳫंसामप्रतिष्ठित्त्याऽअन्तरिक्षऽऋषयस्त्वा
प्प्रथमजादेवेषुदिवोमात्रयाव्वरिम्णाप्प्रथन्तुव्विधर्ताचायमधिपतिश्चतेत्त्वासर्व्वेस

म्विदानानाकस्यपृष्ठेस्वर्ग्गेलोकेयजमानञ्चसादयन्तु ॥ २० ॥ व्विराडसिदक्षिणा
दिग्रुद्रास्तेदेवाऽअधिपतयऽइन्द्रोहेतीनाम्प्रतिधर्त्तापञ्चदशस्त्वास्तोमः पृथिव्याꣳश्र
यतुप्रऽउगमुक्थमव्व्यथायैस्तभ्नातुबृहत्सामप्प्रतिष्ठित्त्याऽअन्तरिक्षऽऋषयस्त्वाप्र
थमजादेवेषुदिवोमात्रयाव्वरिम्णाप्प्रथन्तुव्विधर्त्ताचायमधिपतिश्चतेत्त्वासर्व्वेसंविदा
नानाकस्यपृष्ठेस्वर्ग्गेलोकेयजमानञ्चसादयन्तु ॥ २१ ॥ सम्राडसिप्प्रतीचीदिगा
दित्यास्तेदेवाऽअधिपतयोव्वरुणोहेतीनाम्प्रतिधर्त्तासप्तदशस्त्वा स्तोमः पृथिव्याꣳ
श्रयतुमरुत्त्वतीयमुक्थमव्व्यथायैस्तभ्नातुव्वैरूपꣳसामप्प्रतिष्ठित्त्याऽअन्तरिक्षऽऋ
षयस्त्वाप्प्रथमजादेवेषुदिवोमात्त्रयाव्वरिम्णाप्प्रथन्तुव्विधर्त्ताचायमधिपतिश्चते

त्वासर्व्वेसंव्विदानानाकंस्यपृष्ठस्वर्ग्गेलोकेयजमानञ्चसादयन्तु ॥ २२॥ स्वराडस्यु
दीचीदिङ्मरुतंस्तेदेवाऽअधिपतयःसोमोहेतीनाम्प्रतिधर्त्तैकविंशःस्त्वा स्तोमःपृथि
व्याᳪश्रयतुनिष्केवल्यमुक्थमव्यथायैस्तब्भ्नातुवैराजᳪसामप्रतिष्ठित्या ऽअन्त
रिक्षऽऋषयस्त्वाप्रथमजादेवेषुदिवोमात्त्रयाव्वरिम्णाप्प्रथन्तुव्विधर्त्ता चायमधिप
तिश्चतेत्वासर्व्वेसम्व्विदानानाकंस्यपृष्ठेस्वर्ग्गेलोकेयजमानञ्चसादयन्तु ॥२३॥अधि
पत्न्यसिबृहतीदिग्विश्वेतेदेवाऽअधिपतयोबृहस्पतिर्हेतीनाम्प्रतिधर्त्तात्त्रिणवत्रयस्त्रिᳪ
शौत्त्वास्तोमौपृथिव्याᳪश्रयतांवैश्वदेवाग्निमारुतेऽउक्थेऽअव्यथायैस्तभ्नीताᳪशा
क्वररैवतेसामनीप्प्रतिष्ठित्याऽअन्तरिक्षऽऋषयस्त्वाप्रथमजादेवेषुदिवोमात्त्रयाव्व-

रिम्णा। प्प्रथन्तु व्विधर्त्ता चायमधिपतिश्श्च ते त्त्वा सर्व्वे संव्विदाना नाकस्य पृष्ठे स्वर्ग्गे लोके य
जमानञ्च सादयन्तु ॥ २४ ॥ अयम्पुरो हरिकेशः सूर्य्यरश्मिस्तस्य रथगृत्सश्च रथौजा
श्च सेनानीग्रामण्यौ ॥ पुञ्जिकस्थला च क्रतुस्थला चाप्सरसौ दङ्क्ष्णवः पशवो हेतिः
पौरुषेयो व्वधः प्प्रहेतिस्तेभ्यो नमो ऽअस्तु ते नो ऽवन्तु ते नो मृडयन्तु ते यन्द्विष्मो यश्च नो द्वे
ष्टि तमेषाञ्जम्भे दध्मः ॥ २५ ॥ अयन्दक्षिणा व्विश्वकर्म्मा तस्य रथस्वनश्च रथचित्र
श्च सेनानीग्रामण्यौ ॥ मेनका च सहजन्या चाप्सरसौ यातुधाना हेती रक्षाᳪसि प्प्रहेति
स्तेभ्यो नमो ऽअस्तु ते नो ऽवन्तु ते नो मृडयन्तु ते यन्द्विष्मो यश्च नो द्वेष्टि तमेषाञ्जम्भे दध्मः
॥ २६ ॥ अयम्पश्चाद्विश्वव्यचास्तस्य रथप्रोतश्चासमरथश्च सेनानीग्रामण्यौ ॥ प्रम्लो

चन्तीचानुम्लोचन्तीचाप्सरसौव्याग्घ्राहेतिःसर्पाःप्रेहेतिस्तेभ्यो नमोऽअस्तुतेनोवन्तु
तेनोम्मृडयन्तुतेयंद्विष्मोयश्चनोद्वेष्टितमेषाञ्जम्भेदध्मः ॥ २७ ॥ अयमुत्तरात्संयद्वसु
स्तस्यताक्षर्यश्चारिष्टनेमिश्चसेनानीग्रामण्यौ ॥ विश्वाचीचघृताचीचाप्सरसावापोहे
तिर्व्वातःप्रहेतिस्तेभ्योनमोऽअस्तुतेनोवन्तुतेनोम्मृडयन्तुतेयन्द्विष्मोयश्चनो द्वेष्टित
मेषाञ्जम्भेदध्मः ॥ २८ ॥ अयमुपर्य्यर्व्वाग्वसुस्तस्यसेनजिच्चसुषेणश्चसेनानीग्राम
ण्यौ ॥ उर्वशीचपूर्व्वचित्तिश्चाप्सरसावस्फूर्ज्जन्हेतिर्विद्युत्प्रहेतिस्तेभ्योनमोऽअ
स्तुतेनोवन्तुतेनोम्मृडयन्तुतेयंद्विष्मोयश्चनोद्वेष्टितमेषाञ्जम्भेदध्मः ॥ २९ ॥ मन्त्रो
क्ताऋषयस्तृप्यन्ताम् ॥ ॐअथवङ्क्शःसमानमासाञ्जीवीपुत्रात्साञ्जीवीपुत्रोमा

ण्डूकायनेर्माण्डूकायनिर्माण्डव्यान्माण्डव्यꣳ कौत्सात्कौत्सोमाहित्थेर्माहित्थिर्व्वा
मकक्षायणाद्वामकक्षायणोव्वात्स्याद्वात्स्यꣳशाण्डिल्याच्छाण्डिल्यꣳकुश्रेꣳकुश्रिर्यज्ञव
चसोराजस्तंबायनाद्यज्ञवचाराजस्तंबायनस्तुरात्कावषेयात्तुरꣳ कावषेयꣳ प्रजापतेꣳ
प्रजापतिर्ब्रह्मणोब्रह्मस्वयम्भुब्रह्मणेनमꣳ ॥ १ ॥ वंशोक्ताऋषयस्तृप्यन्ताम् ॥ १ ॥
अथव्वꣳशस्तादिदंवयꣳशौर्पणाय्याच्छौर्पणाय्योगौतमाद्गौतमोव्वात्स्याद्वात्स्योव्वा
त्स्याच्चपाराशर्य्याच्चपाराशर्य्यꣳसांकृत्याच्चभारद्वाजाच्चभारद्वाज औदवाहेश्चशाण्डि
ल्याच्चशाण्डिल्योबैजवापाच्चगौतमाच्चगौतमोबैजवापायनाच्चव्वैष्टपुरेयाच्चव्वैष्टपुरेय
ꣳशाण्डिल्याच्चरौहिणायनाच्चरौहिणायनꣳशौनकाच्चात्रेयाच्चरैभ्याच्चरैभ्यꣳपौतिमा

ष्यायणाच्चकौण्डिन्यायनाच्चकौण्डिन्यायनं कौण्डिन्यात्कौण्डिन्यं कौण्डिन्या
त्कौण्डिन्यंकौण्डिन्याच्चाग्निवेश्याच्च ॥ २ ॥ आग्निवेश्यःसैतवात्सैतवं
पाराशर्यात्पाराशर्य्योजातूकर्ण्याज्जातूकर्ण्योभारद्वाजाद्भारद्वाजोभारद्वाजाच्चासुरा
यणाच्चगौतमाच्चगौतमोभारद्वाजाद्भारद्वाजोबैजवापायनाद्बैजवापायनंकौशिका
यनेःकौशिकायनिर्घृतकौशिकाद्घृतकौशिकं पाराशर्य्यायणात्पाराशर्य्यायणं पारा
शर्य्यात्पाराशर्योजातूकर्ण्याज्जातूकर्ण्यो भारद्वाजाद्भारद्वाजोभारद्वाजाच्चासुराय
णाच्चयास्काच्चासुरायणस्त्रैवणेस्त्रैवणिरौपजन्धनेरौपजन्धनिरासुरेरासुरिर्भारद्वा
जाद्भारद्वाजऽआत्रेयात् ॥ ३ ॥ आत्रेयोमाण्टेर्माण्टिर्गौतमाद्गौतमोगौतमाद्गौत

यजुः श्रा०प्र०

४९

मोऽवात्स्याद्वात्स्यꣳशाण्डिल्याच्छांडिल्यꣳकैशोर्यात्काप्यात्कैशोर्यꣳकाप्यꣳ कुमार
हारितात्कुमारहारितोगालवाद्गालवोऽविदर्भीकौण्डिन्याद्विदर्भीकौण्डिन्योऽवत्सन
पातोबाभ्रवाद्वत्सनपाद्बाभ्रव ꣳ पथ ꣳ सौभरात्पन्था ꣳ सौभरोऽयास्यादाङ्गिरसादया
स्यऽआङ्गिरसआभूतेस्त्वाष्ट्राददाभूतिस्त्वाष्ट्रोऽविश्वरूपात्त्वाष्ट्राद्विश्वरूपस्त्वाष्ट्रोऽश्वि
भ्यामश्विनौदधीचऽआथर्वणाद्दध्यङ्ङाथर्व्वणोदैवोमृत्योꣳ प्राध्वꣳसनान्मृत्युः प्रा
ध्वꣳसनꣳ प्रध्वꣳसनात्प्रध्वꣳसन एकर्षेरेकार्षिर्व्विप्राजित्तेर्व्विप्राजित्तिर्व्यष्टेर्व्यष्टिꣳ
सनारोꣳ सनारुꣳ सनातनात्सनातनꣳ सनगात्सनगꣳ परमेष्ठिनꣳ परमेष्ठीब्रह्मस्वयं
भुब्रह्मणेनमः ॥ वंशोक्ताऋषयस्तृप्यन्ताम् ॥ ४ ॥ अथवꣳशस्तदिदꣳवयꣳशौ ४९
र्पणाय्याच्छौर्पणाय्योगौतमाद्गौतमोऽवात्स्याद्वात्स्योऽवात्स्याच्चपाराशर्य्याच्चपा

राशर्य्यःसाकृत्याच्चभारद्वाजाच्चभारद्वाजऽऔदवाहेश्चशाण्डिल्याच्चशाण्डिल्यो
वैजवापाच्चगौतमाच्चगौतमोवैजवापायनाच्चवैष्टपुरेयाच्चवैष्टपुरेयः शाण्डिल्याच्चरौहि
हिणायनाच्चरौहिणायनःशौनकाच्चजैवन्तायनाच्चरैभ्याच्चरैभ्यः पौतिमाष्यायणाच्चकौ
ण्डिन्यायनाच्चकौण्डिन्यायनःकौण्डिन्याभ्यांकौडिन्यऽऔर्णवाभेभ्यऽऔर्णवाभाः
कौण्डिन्यात्कौण्डिन्यःकौत्डिन्यात्कौण्डिन्यःकौण्डिन्याच्चाग्निवेश्याच्च ॥ ९ ॥
आग्निवेश्यः सैतवात्सैतवः पाराशर्य्यात्पाराशर्य्योजातूकर्ण्याज्जातूकर्ण्योभारद्वाजा
द्भारद्वाजोभारद्वाजाच्चासुरायणाच्चगोतमाच्चगौतमोभारद्वाजाद्भारद्वाजोबलाका
कौशिकःबलाहकीकाषायणात्काषायणः सौकरायणात्सौकरायणस्त्रैवणस्त्रैवणिरौप

यजुः जन्धनेरौपजंधनि ः सायकायनात्सायकायन ः कौशिकायनेः कौशिकायानिर्घृतकौशि श्रा.प्र.
५० कादघृतकौशिकः पाराशर्य्यायणात्पाराशर्यायणः पाराशर्यात्पाराशर्य्योजातूकर्ण्या
ज्जातूकर्ण्योभारद्वाजाद्भारद्वाजोभारद्वाजाच्चासुरायणाच्चयास्काच्चासुरायणस्त्रैवणेस्त्रैव
णिरौपजंधनेरौपजंधनिरासुरेरासुरिर्भारद्वाजाद्भारद्वाजऽआत्रेयात् ॥ ६ ॥ आ
त्रेयादात्रेयोमाण्टेर्माण्टिर्गौतमाद्गौतमोगौतमाद्गौतमोव्वात्स्याद्वात्स्यः शाण्डिल्या
च्छाण्डिल्यः कैशोर्यात्काप्यात्कैशोर्यःकाप्यः कुमारहारितात्कुमारहारितोगालवाद्गा
लवोव्विदर्भीकौण्डिन्याद्विदर्भीकौण्डिन्योव्वात्सनपातो बाभ्रवाद्वत्सनपाद्बाभ्रवः प ५०
थः सौभरात्पन्थाः सौभरोयास्यादांगिरसादयास्यआङ्गिरसआभूतेस्त्वा

ष्ट्रादाभूतिस्त्वाष्ट्रोऽविश्वरूपात्त्वाष्ट्राद्विश्वरूपस्त्वाष्ट्रोऽश्विभ्यामाश्विनौदधीचऽआथर्व्व
णाद्दध्यङ्ङाथर्वणोऽथर्वाणोदैवादथर्व्वादैवोमृत्त्योः प्राध्वꣳसनान्मृत्युः प्राध्वꣳसनः
प्रध्वꣳसनात्प्रध्वꣳसनऽएकर्षैरेकर्षिर्व्विप्रजित्तेर्विप्रजित्तिर्व्यष्टेर्व्यष्टिःसनारोःस्नारुःस
नातनात्सनातनः सनगात्सनगः परमेष्ठिनः परमेष्ठीब्रह्मणोब्रह्मस्वयंभुवेब्रह्मणेन
मः॥७॥वंशोक्ताऋषयस्तृप्यन्ताम् ॥ अथव्वꣳशस्तादिदंवयंभारद्वाजीपुत्राद्भारद्वाजी
पुत्रोऽवात्सीमांडवीपुत्राद्वात्सीमांडवीपुत्रः पाराशरीपुत्रात्पाराशरीपुत्रोगार्गीपुत्राद्गा
र्गीपुत्रः पाराशरीकौण्डिनीपुत्रात्पाराशरीकौंडिनीपुत्रोगार्गीपुत्राद्गार्गीपुत्रोगार्गीपु
त्राद्गार्गीपुत्रोबाडेयीपुत्राद्बाडेयीपुत्रोमौषिकीपुत्रान्मौषिकीपुत्रोहारिकर्णीपुत्राद्धारि

कर्णीपुत्रोभारद्वाजीपुत्राद्भारद्वाजीपुत्रः पैङ्गीपुत्रात्पैंगीपुत्रः शौनकीपुत्राच्छौनकीपुत्रः ॥ ८ ॥ काश्यपीबालाक्यामाठरीपुत्रात्काश्यपीबालाक्या माठरीपुत्रःकौत्सीपुत्रात्कौत्सीपुत्रोबौधीपुत्राद्बौधीपुत्रः शालङ्कायनीपुत्राच्छालंकायनीपुत्रोव्वार्षगणीपुत्राद्वार्षगणीपुत्रोगौतमीपुत्राद्गौतमीपुत्रआत्रेयीपुत्रादात्रेयीपुत्रोगौतमीपुत्राद्गौतमीपुत्रोव्वात्सीपुत्राद्वात्सीपुत्रोभारद्वाजीपुत्राद्भारद्वाजीपुत्रः पाराशरीपुत्रात्पाराशरीपुत्रोव्वार्कारुणीपुत्राद्वार्कारुणीपुत्रआर्तभागीपुत्रादार्तभागीपुत्रःशौङ्गीपुत्राच्छौङ्गीपुत्रःसांकृतीपुत्रात्सांकृतीपुत्रः॥९॥आलम्बीपुत्रादालम्बीपुत्रआलम्बायनीपुत्रादालंबायनीपुत्रोजायन्तीपुत्राज्जायन्तीपुत्रोमांडुकायनीपुत्रान्माण्डूकायनीपुत्रोमां

डूकीपुत्रान्मांडूकीपुत्रःशांडीलीपुत्राच्छाण्डिलीपुत्रोराथीतरीपुत्राद्राथीतरीपुत्रः कौ
ञ्चिकीपुत्राभ्यांक्रौञ्चिकीपुत्रौवैदभृतीपुत्राद्वैदभृतीपुत्रोभालुकीपुत्राद्भालुकीपुत्रःप्रा
चीनयोगीपुत्रात्प्राचीनयोगीपुत्रः सांजीवीपुत्रात्सांजीवीपुत्रः कार्शकेयीपुत्रात्कार्श
केयीपुत्रः ॥ १० ॥ प्राश्नीपुत्रादासुरिवासिनःप्राश्नीपुत्रआसुरायणादासुरायण
आसुरेरासुरिर्याज्ञवल्क्याद्याज्ञवल्क्य उद्दालकादुद्दालकोरुणादरुणउपवेशेरुपवेशिः
कुश्रे कुश्रिर्व्वाजश्रवसोऽव्वाजश्रवाज्जिह्वावतोबाध्योगाज्जिह्वावान्बाध्योगोऽसिता
द्वार्षगणादसितोऽव्वार्षगणोहरितात्कश्यपाद्धरितःकश्यपःशिल्पात्कश्यपाच्छिल्पः
कश्यपःकश्यपान्नैध्रुवेःकश्यपोनैध्रुविर्व्वाचोऽव्वागम्भिण्याअंभिण्यादित्यादादि

त्यानिमानिशुक्लानियजूꣳषि॰वाजसनेयेनयाज्ञयल्क्येनाख्यायन्ते ॥४॥ वंशोक्ताऋ
षयस्तृप्यन्तां ॥ इमावेवगोतमभरद्वाजावयमेवगोतमोयं भारद्वाजइमावे॰विश्वामित्र
जमदग्नीअयमेव॰विश्वामित्रोयं जमदग्निरिमावेव॰वसिष्ठकश्यपावयमेव॰वसिष्ठोयंक
श्यपो॰वागेवात्रि॰र्वाशाह्यन्नमद्यतेतिर्हवैनामैतद्यदत्रिरितिस॰र्वस्यात्ताभवति स॰र्वम
न्नम्भवतियएवँवेद ॥ १ ॥ ब्राह्मणोक्ताऋषयस्तृप्यन्ताम् ॥ आचार्यशिष्याअयंपुर
इत्यादीमावेवेत्यन्तैर्मन्त्रब्राह्मणैस्तर्पणंसमापयेयुरिति ॥ पौषमासस्थरोहिण्यामि
त्यत्रप्रयोगावसरेवासुदेवप्रभृतिनिबंधकाराजीवत्पितृकस्यमातामहादितर्पणंलिखि
तवंतस्तदसमञ्जसम् ॥ वस्तुतस्तुयद्वत्पित्रादितर्पणेजीवत्पितृकस्यनाधिकारः
प्रतीयतेतद्वन्मातामहादितर्पणेप्यनधिकारएव पित्र्यञ्जीवत्पितुर्नोक्तमितिनिगमवा

क्यात् ॥ नपित्र्यञ्जीवत्पितृकःप्रकुर्वीतकदाचनेतिवृद्धगार्ग्यमपि कात्यायनः सपि
तुःपितृकृत्येषुअधिकारोनाविद्यते ॥ नजीवन्तमतिक्रम्यकिञ्चिद्दद्यादितिश्रुतिःपितृ
कृत्यानिश्राद्धतर्पणस्वधाकारपितृतृप्त्यर्थंदानानीतिव्याख्यातं जीवत्पितृकसव्ये
तथाअन्यांश्चेतरइतिस्वसूत्रेपिमृतपितृकस्यैवपित्रादितर्पणंसूत्रकारेणप्रदर्शितं ॥ म
हानदीषुसर्वासुतीर्थेषुचनदेषुच । जीवत्पितापिकुर्वीतश्राद्धंपार्वणधर्मवत्इतिवत्प्र
तिप्रसवोप्यत्रास्तेयत्रप्रातिप्रसवस्तत्र भवति ॥ यथाजीवत्पितापिकुर्वीततर्पणंयमभी
ष्मयोरितिअन्येविशेषाअत्रजीवत्पितृकनिर्णयेसन्तिपरन्तुग्रन्थगौरवभयान्नलिखि
ताः ॥ एवंऋषितर्पणंविधायाचार्याःशिष्या ॐकारव्याहृतिपूर्वांसावित्रींचतुःपठेयुः
तत्रसूत्रंसावित्रींचतुरनुद्रुत्येतिसूत्रार्थःसाचार्याःसावित्रींचतुःपठेयुः उत्सर्गसूत्रेसावि
त्रींचतुरनुद्रुत्येतिल्यबन्तनिर्देशेनसावित्रीपठनाव्यवहितकालेविरताः स्मेतिपठनंय

द्यपिप्राप्तंतथाप्युत्तरसूत्रेप्रवचनंचपूर्ववदित्युक्तेस्तत्रयथाप्रवचनंदृष्टंतथात्रकर्तव्यंते
नसावित्रीपठनानन्तरमेवाध्यायादीन्प्रब्रूयुस्तदन्तेविरताःस्मइतिपठेयुरितिसिद्धंवि
रतोत्तरंपठनाभावात् ॥ तथाचकारिका ॥ शिष्याःपठेयुःसावित्रींचतुष्कृत्वोगुरुः
स्वयं ॥ उपाकृतिवन्मंत्रांश्चप्रणवंयोजयेत्कविः ॥ १० ॥ सावित्रींत्रिःसमुच्चार्यह्य
ध्यायांश्चप्रपाठकान ॥ शतस्थानान्यनुस्मृत्यकण्डिकाश्चतथान्तिमाः ॥ ११ ॥
अन्तिमाःफक्किकाब्रूयादग्निमीलेपुरोहितम् ॥ इषेत्वयग्नआयाहिशन्नोदेवीरभिष्टये॥१२॥
सहनोस्त्विवतिमन्त्रञ्चपश्चादुभाक्वीतिच ॥ ऋषिश्राद्धंततःकृत्वाब्राह्मणानांविस
र्जनं ॥ १३ ॥ कारिकार्थः । प्राङ्मुखोगुरुःस्वयम् ॐकारपूर्विकांसावित्रींचतुःपठेत्॥
प्रत्यङ्मुखोपविष्टाः शिष्यास्तद्वत्पठेयुः । सावित्रीपठनोत्तरमध्यायप्रपाठकशतांत्य
कंडिकांत्यफक्किकाप्रतीकानिपठेयुः । नत्वाचारमूलंप्रतीकपठनं ॥ किन्त्वध्यायादी

न्प्रब्रूयादिति सूत्रेआदिशब्दस्यप्रतीकोपादानंव्याख्यातृभिर्व्याख्यातं ॥ युगपत्स
र्ववेदोत्सर्गपक्षेऋग्वेदोक्तान्यृषिमुखानिसामवेदोक्तानिपर्वाण्यथर्ववेदोक्तानिसूत्राणि
पठेयुः ॥ तत्रसूत्रं ॥ क्षपणंप्रवचनंचपूर्ववत् ॥ सूत्रार्थः ॥ प्रवचनमध्यायादि
पठनंक्षपणमनध्ययनंपूर्ववत् ॥ उपाकर्मवदित्यर्थः ॥ अथाध्ययनक्रमः ॥
प्राङ्मुखोपविष्टोगुरुः ॥ ॐकारपूर्वांसावित्रींत्रिःपठित्वाप्रत्यङ्मुखोपविष्टशिष्ये
भ्योमन्त्रब्राह्मणयोरध्यायादीन्पाठयेत् ॥ शिष्यायथोक्तमध्यायादीनधीयीरन् ॥
ॐभूर्भुवःस्वः तत्सवितुर्वरेण्यं ॥ अथसंहिताध्यायप्रतीकं ॥ इषेत्त्वा ॥ १ ॥ कृ
ष्णोसि ॥ २ ॥ समिधाग्निम् ॥ ३ ॥ एदम् ॥ ४ ॥ अग्नेस्तनूः ॥ ५ ॥ देवस्य
त्वा ॥ ६ ॥ व्वाचस्पतये ॥ ७ ॥ उपयामगृहीतोसि ॥ ८ ॥ देवसवितः ॥ ९ ॥

अपोदेवाः ॥ १० ॥ युञ्जानःप्प्रथमम् ॥ ११ ॥ दृशानोरुक्मः ॥ १२ ॥ मयिगृह्णा
मि ॥ १३ ॥ दध्रुवक्षितिर्ध्रुवयोनिः ॥ १४ ॥ अग्नेजातान् ॥ १५ ॥ नमस्ते ॥१६॥
अश्मन्नूर्जम् ॥ १७ ॥ व्वाजश्च ॥ १८ ॥ स्वाद्वीन्त्वा ॥ १९ ॥ क्षत्रस्ययो
निः ॥ २० ॥ इमम्मे ॥ २१ ॥ तेजोसि ॥ २२ ॥ हिरण्यगर्भःसम् ॥ २३ ॥
अश्वस्तूपरः ॥ २४ ॥ शादन्दद्भिः ॥ २५ ॥ अग्निश्च ॥ २६ ॥ समास्त्वा ॥ २७ ॥
होतायक्षत् ॥ २८ ॥ समिद्धोऽअञ्जन् ॥ २९ ॥ देवंसवितः ॥ ३० ॥ सहस्रशीर्षा
पुरुषः ॥ ३१ ॥ तदेव ॥ ३२ ॥ अस्याजरासः ॥ ३३ ॥ यज्जाग्रतः ॥ ३४ ॥ अपे
तः ॥ ३५ ॥ ऋचव्वाचम् ॥ ३६ ॥ देवस्यत्वा ॥३७॥ देवस्यत्वा ॥ ३८ ॥ स्वाहा

प्राणेभ्यं÷ ॥ ३९ ॥ ईशाऽवास्यम् ॥ ४० ॥ इतिसंहिताध्यायाः ॥ क्वचित्पुस्तकेअ
ध्यायोक्ताऋषयस्तृप्यंतामित्यपिपाठोदृश्यतेसत्याज्यएव ॥ मत्कृतपद्धतौद्रष्ट
व्यं ॥ परतद्धुरपरं ॥ अथशतानि ॥ इषेत्वा ॥ १ ॥ परिते ॥ २ ॥ अग्नेनयं ॥ ३ ॥
उपयामगृहीतोसिसुशर्म्मासि ॥ ४ ॥ सोमस्यत्विषिं÷ ॥ ५ ॥ परस्याऽअधि ॥ ६ ॥
अन्यावं÷ ॥ ७ ॥ राज्ञयांसि ॥ ८ ॥ नमोहिरंण्यबाहवे ॥ ९ ॥ इन्द्रेमम् ॥ १० ॥ इ
मौतं ॥ ११ ॥ अन्नांत्परिस्रुतं÷ ॥ १२ ॥ अश्विनातेजंसा ॥ १३ ॥ पृथिव्यैस्वा
हां ॥ १४ ॥ प्रजापतयेच ॥ १५ ॥ तऽअस्य ॥ १६ ॥ तनूनपात्पथं÷ ॥ १७ ॥ अ
यमिह ॥ १८ ॥ अनुंनः ॥ १९ ॥ इयत्यग्रे ॥ हिरण्मयेन ॥ शेषंपञ्चसप्ततिः ॥ ७५ ॥

कण्डिकाः ॥ व्रतमुपैष्यन् ॥ १ ॥ सवैकपालान्येवान्यतरउपदधाति ॥ २ ॥ सवै
स्रुचःसंमार्ष्टि ॥ ३ ॥ हिङ्कृत्यान्वाह ॥ ४ ॥ सवैप्रवरायाश्रावयाति ॥ ५ ॥ ऋतवो
हवैदेवेषुयज्ञेभागमीषिरे ॥ ६ ॥ सवैपर्णशाखयाव्वत्सानपाकरोति ॥ ७ ॥ मनवेह
वैप्रातः ॥ ८ ॥ सयत्राह ॥ ९ ॥ सयद्वाइतश्चेतश्चसम्भराति ॥ १० ॥ उद्धृत्याहवनी
यम्पूर्णाहुतिंजुहोति ॥ ११ ॥ सूर्योहवाअग्निहोत्रम् ॥ १२ ॥ ॥ अयहुतेग्निहोत्रउप
तिष्ठते ॥ १३ ॥ प्रजापतिर्हवाइदमग्रएकएवास ॥ १४ ॥ महाहविषाहवैदेवावृत्रञ्ज
घ्नुः ॥ १५ ॥ देवयजनञ्जोषयन्ते ॥ १६ ॥ दक्षिणेनावहनीयंप्राचीनग्रीवेकृष्णाजिने
उप स्तृणाति ॥ १७ ॥ सप्तपदान्यनुनिक्रामाति ॥ १८ ॥ शिरोवैयज्ञस्यातिथ्यंबाहूप्रायणी

योदयनीयौ ॥१९॥ तद्यएषपूर्वाध्यर्यौऽवर्षिष्ठस्थूणाराजोभवति ॥ २० ॥ उदरमेवास्यस
दः ॥२१॥ अभ्रिमादत्ते ॥२२॥ तद्यत्रैतत्प्रवृत्तोहोताहोतृषदनउपविशति ॥२३॥ प्रजा
पतिर्वैप्रजाःसमृजानोरिरिचानइमामन्यत ॥२४॥ प्राणोहवाऽअस्योपांशुः ॥ २५ ॥
चक्षुषीहवाअस्यशुक्रामन्थिनौ ॥ २६ ॥ भक्षयित्वासमुपहूताःस्यइत्युक्त्वोत्तिष्ठति
॥ २७ ॥ मनोहवाअस्यसविता ॥२८॥ आदित्येनचरुणोदयनीयेनप्रचरति ॥२९॥
प्रजापतिर्वाएषयदंशुः ॥३०॥ देवाश्चवाऽअसुराश्च ॥३१॥ अथस्रुवश्चाज्यविलाप
नींचादाय ॥ ३२ ॥ अरण्योरग्नीसमारोह्य ॥ ३३ ॥ केशवस्यपुरुषस्य ॥ ३४ ॥ आग्ने
योष्टाकपालःपुरोडाशोभवति ॥ ३५ ॥ असद्वाइदमग्रआसीत् ॥ ३६ ॥ प्रजापतिराग्नि

रूपाण्यभ्यध्यायत् ॥ ३७ ॥ एतद्दैदेवा अब्रुवन् ॥ ३८ ॥ अथैनमतः खनत्येव ॥ ३९ ॥
पर्णकषायनिष्पक्वा एता आपोभवन्ति ॥ ४० ॥ भूयाᳬंसिहवीᳬंषीषिभवन्ति ॥ ४१ ॥
रुक्मम्प्रतिमुच्यबिभर्ति ॥ ४२ ॥ त्वनीबाह्येताग्निबिभ्रदित्याहुः ॥ ४३ ॥ गार्हपत्यंचे
ष्यन्पलाशशाखयाव्युदूहाति ॥ ४४ ॥ अथातोनैर्ऋतीर्हरन्ति ॥ ४५ ॥ चितोगार्हपत्यो
भवति ॥ ४६ ॥ आत्मन्नग्निंगृह्णीतेचेष्यन् ॥ ४७ ॥ कूर्म्मंमुपदधाति ॥ ४८ ॥ प्राणभृत
उपदधाति ॥ ४९ ॥ द्वितीयांचितिमुपदधाति ॥ ५० ॥ तृतीयांचितिमुपदधाति ॥ ५१ ॥
चतुर्थीञ्चितिमुपदधाति ॥ ५२ ॥ पञ्चमींचितिमुपदधाति ॥ ५३ ॥ नाकसदउपदधा
ति ॥ ५४ ॥ ऋतव्याउपदधाति ॥ ५५ ॥ अथातः शतरुद्रियंजुहोति ॥ ५६ ॥ उपवसथीवे

हन् प्रातरुदितआदित्ये ॥५७॥ अथातोऽवैश्वानरंजुहोति ॥५८॥ अथातोराष्ट्रभृतोजु
होति ॥५९॥ अथातःपयोव्रततायै ॥६०॥ अग्निरेषपुरस्ताच्चीतये ॥६१॥ प्रजापतिः
स्वर्गंलोकमजिगाᳪंसत्॥६२॥ प्राणोगायत्री ॥६३॥ प्रजापतिंविमृस्तम् ॥६४॥ तस्य
वाएतस्याग्नेः ॥६५॥ अथहैतेरुणे॥६६॥ सँव्वत्सरोवैयज्ञःप्रजापतिः॥६७॥ त्रिर्हवैपुरुषो
जायते ॥६८॥ व्याग्घवाऽएतस्याग्निहोत्रस्याग्निहोत्री ॥६९॥ उद्दालकोहारुणिः॥७०॥
उर्वशीहाप्सराः ॥७१॥ भृगुर्हवैव्वारुणिः ॥७२॥ पशुबन्धेनयजते ॥७३॥ वद्ययाह
वै ॥७४॥ अयंवैयज्ञोयोयंपवते ॥ ७५ ॥ समुद्रँव्वाऽएतेप्रतरन्ति ॥ ७६ ॥ यद्वालो
के ॥७७॥ दीर्घसत्रᳪंहवाऽएतऽउपयन्ति ॥७८॥ तदाहुर्यदेषदीर्घसत्री ॥७९॥ सो

यजुः मोवैराजायज्ञꣳप्रजापतिꣳ॥ ८० ॥ विश्वरूपꣳवैत्वाष्ट्रमिन्द्रोहन् ॥ ८१ ॥ इन्द्रस्यवैय श्रा.प्र.
५७ त्र ॥ ८२ ॥ एतस्माद्वैयज्ञात्पुरुषोजायते ॥ ८३ ॥ ब्रह्मौदनंपचाति ॥ ८४ ॥ प्रजाप
तिर्देवेभ्योयज्ञान्व्यादिशत् ॥ ८५ ॥ प्रजापतेरक्ष्यश्वयत् ॥ ८६ ॥ प्रजापतिरकाम
यत ॥ ८७ ॥ अथप्रातर्गौतमस्य ॥ ८८ ॥ पुरुषोहनारायणोकामयत् ॥ ८९ ॥ब्रह्म
वैस्वयम्भुतपोतप्यत ॥ ९० ॥ अथास्मैश्मशानंकुर्वन्ति ॥ ९१ ॥ देवाहवैसत्रंनिषे
दुꣳ ॥ ९२ ॥ अथातोरौहिणौजुहोति ॥ ९३ ॥ सवैतृतीयेहन् ॥ ९४ ॥ द्वयाहप्राजाप
त्याः ॥ ९५ ॥ दृप्तबालाकिर्हानुचानोगार्ग्यआस ॥ ९६ ॥ जनकोहवैदेहः ॥ ९७ ॥ ५७
जनकꣳहवैदेहंयाज्ञवल्क्योजगाम ॥ ९८ ॥ पूर्णमदःपूर्णमिदम् ॥ ९९ ॥ श्वेतकेतुर्ह

वाआरुणेयः ॥ १०० ॥ इतिब्राह्मणाध्यायः ॥ १ ॥ क्वचित्पुस्तकेचतुर्दशकांडेषडध्या
योक्ताऋषयस्तृप्यंतामित्यपिपाठोदृश्यते ॥ अथप्रपाठकाः ॥ व्रतमुपैष्यन् ॥ १ ॥
चतुर्द्धाविहितोहवाअग्रेग्निरास ॥ २ ॥ तेवाआर्द्राःस्युः ॥ ३ ॥ सस्रुचोत्तरमाघारमाघार
यिष्यन् ॥ ४ ॥ यज्ञेनवैदेवाः ॥ ५ ॥ यज्ञेनवैदेवादिवमुपोदक्रामन् ॥ ६ ॥ सवैस्रुचौव्यूह
ति ॥ ७ ॥ सयद्वाइतश्चेतश्चसम्भरति ॥ ८ ॥ वरुणोहैनंराज्यकामआदधे ॥ ९ ॥ यत्रवै
प्रजापतिःप्रजाःससृजे ॥ १० ॥ प्रजापतिर्हवाएतेनाग्नेयेनयज्ञेनेजे ॥ ११ ॥ महाहविषाहवै
देवावृत्रजघ्नुः ॥ १२ ॥ देवयजनंजोषयन्ते ॥ १३ ॥ वाचंयच्छति ॥ १४ ॥ नीडेकृष्णाजि
नमास्तृणाति ॥ १५ ॥ तद्यएषपूर्वार्ध्योवर्षिष्ठस्थूणराजोभवति ॥ १६ ॥ विजामानोहवा

स्यधिषण्याः॥१७॥पाशेकृत्वाप्रतिमुञ्चति॥१८॥सोत्युपयजाति॥१९॥प्राणोहवाअस्यो
पाꣳशुः॥२०॥आत्माहवाअस्याग्रयणः ॥ २१ ॥ घ्नन्तिवाएतद्यज्ञम् ॥ २२ ॥ सवाअ
वभृथमभ्यवैति ॥ २३ ॥ तद्यत्रैतद्द्वादशाहेनव्यूढच्छन्दसायजते ॥ २४ ॥ देवाश्च
वाअसुराश्च ॥२५॥ बार्हस्पत्येनचरुणाप्रचराति ॥२६॥ सवाअपःसम्भरति ॥ २७ ॥
मैत्रावरुण्यापयस्ययाप्रचरति ॥ २८ ॥ असद्वाइदमग्रआसीत् ॥ २९ ॥ प्राजापत्य
ञ्चरङ्काआलम्भते ॥३०॥ प्रतीप्ताएतेग्नयोभवन्ति ॥ ३१ ॥ तस्याएतस्याआषाढां
पूर्वांकरोति ॥ ३२ ॥ रुक्मंप्रतिमुञ्चाबिभर्ति ॥ ३३ ॥ गार्हपत्यञ्चेष्यन्पलाशशाख
याव्युदूहति ॥ ३४ ॥ अथदर्भस्तम्बमुपदधाति ॥ ३५ ॥ आत्मन्नग्निंगृह्णीतेचेष्य

न् ॥ ३६ ॥ कूर्ममुपदधाति ॥ ३७ ॥ प्राणभृतउपदधाति ॥ ३८ ॥ अथविश्वज्यो
तिषमुपदधाति ॥ ३९ ॥ अथातोन्वावृतम् ॥ ४० ॥ गार्हपत्यमुपदधाति ॥ ४१ ॥
अथातःशतरुद्रियंजुहोति ॥ ४२ ॥ प्रत्येत्याग्निंप्रहरिष्यन् ॥ ४३ ॥ अथैतान्यज्ञक्र
तून्जुहोति ॥ ४४ ॥ अथप्रातःप्रातरनुवाकमुपाकरिष्यन् ॥ ४५ ॥ अग्निरेषपुरस्ता
च्चीयते ॥ ४६ ॥ अथातश्चयनस्यैव ॥ ४७ ॥ सम्वत्सरोवैप्रजापतिरग्निः ॥ ४८ ॥ ने
ववाइदमग्रेऽसदासीन्नेवसदासीत् ॥ ४९ ॥ सम्वत्सरोवैयज्ञःप्रजापतिः ॥ ५० ॥ अ
पिहवाएतर्हि ॥ ५१ ॥ प्रजापतिर्वैप्रजाःसृजमान्येतप्यत ॥ ५२ ॥ अथातःस्वाध्या
यप्रशꣳसा ॥ ५३ ॥ अयंवैयज्ञोयोयंपवते ॥ ५४ ॥ पुरुषꣳहनारायणंप्रजापतिरुवा

च ॥ ५५ ॥ सोमोवैराजायज्ञःप्रजापतिः ॥ ५६ ॥ प्रजापतिर्यज्ञमसृजत ॥ ५७ ॥
ब्रह्मौदनंपचति ॥ ५८ ॥ नियुक्तेषुपशुषु ॥ ५९ ॥ प्रमुच्याश्वंदक्षिणेनवेदिम् ॥ ६० ॥
पुरुषोहनारायणोकामयत॥ ६१ ॥ देवाहवैसत्रन्निषेदुः ॥ ६२ ॥ सयत्रैताᳩहोतान्वा
ह ॥ ६३ ॥ द्व्याहप्राजापत्याः ॥ ६४ ॥ दृप्तबालाकिर्हानुचानोगार्ग्यआस ॥ ६५ ॥
अथहैनंभुज्युर्लाह्यायनिःपप्रच्छ ॥ ६६ ॥ जनकᳩहवैदेहंयाज्ञवल्क्योजगाम ॥ ६७ ॥
भूमिरंतरिक्षंद्यौरिति ॥ ६८ ॥ इतिचतुर्दशकांडोक्ताःप्रपाठकाः ॥ अथशतस्थानानि ॥
व्रतमुपैष्यन ॥ १ ॥ तद्यदेवंपिनष्टि ॥ २ ॥ अथाज्यालिप्ताभ्यांपवित्राभ्याम् ॥ ३ ॥ ५९
बृहच्छोचायविष्ठ्येति ॥ ४ ॥ वसूनाᳩरातौस्याम ॥ ५ ॥ अग्निर्वैदेवानामद्धात

मां ॥६॥ तद्यथायोनौरेतःसिञ्चेत ॥ ७॥ तांवैप्राश्नंत्येव ॥ ८ ॥ अथऽवेदपत्रीन्वि
स्रऽंसयाति ॥ ९ ॥ अयँवैयज्ञोयोयंपवते ॥ १५ ॥ अथऽयदस्तमेति ॥ ११ ॥ रेवती
रमध्वमिति ॥१२ ॥ सवाआग्नेयोष्टाकपालःपुरोडाशोभवाति ॥ १३ ॥ तद्येसोमेनेजा
नाः ॥ १४ ॥ अथोत्तरेणशालांपारिश्रयन्ति ॥ १५ ॥ अथोल्लिखति ॥ १६ ॥ साया
बभ्रुःपिङ्गाक्षीमासोमक्रयणीस्यात् ॥ १७ ॥ तेदेवाः ॥ १८ ॥ इन्द्रघोषःप्रोक्षणीरध्वं
य्युरादत्ते॥१९॥ साहाकद्रूरुवाच ॥२०॥क्वचित्पुस्तकेचतुर्दशकांडेप्रपाठोक्ताऋषयस्तृ
प्यंतामित्यपिपाठोदृश्यते॥तद्ययतउच्छ्रितादेवाहवैयज्ञन्तन्वानाः॥२१॥अथपार्श्वेन
वासिनावाप्रयौति ॥ २२ ॥ सजुहोतिश्रृणोत्वग्निःसामिधाहवमइति ॥ २३ ॥ इयऽह

वाउपाᳲंशुः ॥२४॥ तस्यासावेवध्रुवआयुः ॥२५॥ यत्राद्यावापृथिव्यᳲंशस्यते॥ २६॥
६० सआज्यस्योपस्तीर्यद्विश्चरोरवद्याति ॥२७॥ इन्द्रोहवैषोडशी ॥ २८ ॥ तासांद्वादशग
र्भाः ॥२९॥ तद्धैहस्मपुराप्वाजपेयेनयजते॥३०॥अथदिशोनुवीक्षमाणोजपति॥३१॥
सवैदीक्षते॥३२॥अथैतमाभिषेकम् ॥३३॥षडेवोत्तरेचरवः ॥३४॥ अथोआहुः ॥३५॥
अमावास्यायांदीक्षते ॥ ३६ ॥ अश्वस्यपदेजुहोति ॥ ३७॥अथैनांधूपयति॥ ३८॥ त
परिनाभिबिभर्ति ॥ ३९ ॥ अथोखान्निवपाति ॥४०॥ चतस्रःसीतायजुषाकृषति॥४१॥
तंप्रत्यंचयन्तम् ॥४२॥ अपाङ्गभत्सीदेति ॥ ४३ ॥ तस्यमनोव्वैश्वकर्मणमिति ॥४४॥ ६०
तद्वैषामध्यमास्वयमातृणा ॥ ४५ ॥ एकादशाभिरस्तुवतेति ॥ ४६ ॥ तावायतादशेष्ट

काउपदधाति ॥४७॥ अथस्वयमातृणमुपदधाति ॥ ४८॥ अधोत्तरार्द्धेनप्राक् ॥४९॥
सयःसव्वैश्वानरः ॥५०॥ यास्तेऽअग्नेसूर्येरुचः॥५१॥ नामकृत्वाथैनमुपतिष्ठते ॥५२
यावाइदंवेदिःसप्तविधस्य ॥ ५३॥ अयमेवाकाशोजूः ॥५४॥ सोयमात्मात्रेधाविहित
एव ॥५५॥ अथव्वर्ठंशः॥५६॥ अथयामेतामाहुतिंजुहोति ॥५७॥अथयदनुवाच्या
मनुच्य ॥५८॥ ब्रह्मचार्यसीत्याह ॥५९॥सयत्पशुबन्धेनयजते ॥ ६०॥ दशोतिहोवा
च॥६१॥अथयत्रस्कन्नꣳस्यात् ॥६२॥अथयदिप्रप्लुतः ॥६३॥ सर्वआश्विनाभवन्ति
॥६४॥ प्रजापतिर्यज्ञममृजत ॥६५॥ किम्वावपनंमहदिति ॥६६॥ अथयोस्यनिष्कःप्र
तिमुक्ताभवति ॥६७॥ एतनर्हैन्द्रोतोदेवापःशौनकः ॥६८॥ चतस्रःसीतायजुषाकृषति

॥६९॥ अथोत्तरतःसिकताउपकीर्णाभवन्ति॥७०॥अथरौहिणोजुहोति॥७१ ॥तेदेवा अब्रुवन ॥७२॥ तानियदागृह्णाति ॥७३॥ योग्नौतिष्ठन॥७४॥कतमआत्मेति॥७५॥अ थहैनंमनुष्याऊचुः ॥७६॥ अथायामिच्छेद्गर्भन्दधीतेति॥७७॥इतिसप्तसप्तत्युपनिष त्स्थानानि॥ क्वचित्पुस्तकेचतुर्दशकांडेषुउपनिषदुक्ताऋषयस्तृप्यंतामित्यपिपाठोदृ श्यते॥ अथव्रतंविसृजते॥१॥ सयास्मिन्हर्तावमुंलोकमेति ॥२॥ अथनिग्राभ्योग्रहान्वि गृह्णते॥३॥अथगृहपतिःसुब्रह्मण्यामाह्वयाति॥४॥तावाएताः॥५॥तानिदशभवन्ति॥ ६॥ ताऽएताऽअंगुलयः॥७॥मध्यमेवतृतीयाचितिः॥८॥सहोवाच॥९॥अथव्वठंशः ॥१०॥ तस्माउहैतदुवाच॥११॥सवाएषआत्मैवयत्सौत्रामणी ॥ १२॥ मर्यादायाएवलोष्टमा

हुत्य॥१३॥प्राश्नीपुत्रादासुरिवासिनः ॥१४॥ इतिअंत्यकंडिका ॥ एवंव्रतंविसृजेत् ॥ ॥१॥परमांगतिङ्गच्छतीति ॥ २ ॥ तस्माद्धोतृचमसात् ॥ ३ ॥ तास्मिन्समुपहवामिष्ठा समिधोभ्यादधाति ॥ ४ ॥ द्वादशवात्रयोदशवादाक्षिणाभवन्ति ॥ ५ ॥ यावानग्निर्याव त्यःसमात्रातावत्तद्भवति ॥६॥ तस्मात्समानसम्बन्धता ॥ ७ ॥ तस्मादिमेप्राणउप रिष्टादसञ्छन्नाः ॥८॥ संवादेनैवर्विजोलोकइति ॥ ९ ॥ ब्रह्मणोब्रह्मस्वयम्भुब्रह्मणेन मः ॥ १० ॥ कैशिनीरवेमाआप्येतर्हिप्रजाजायंते ॥ ११॥ तस्माद्धिमावात्मानमभि तोबाह्व ॥ १२ ॥ तस्मादुहैतज्जीवाश्चपितरश्चनसंदृश्यन्ते ॥ १३ ॥ व्वाजसनेयेनयाज्ञ वल्क्येनाख्यायन्ते ॥ १४ ॥ इतिअंत्यफक्किका ॥ अग्निमीळेपुरोहितंयज्ञस्यदेवमृ

त्त्विजम् ॥ होतारंरत्नधातमम् ॥ इषेत्वोर्ज्जेत्वा०पाहि ॥ २ ॥ अग्नआयाहिवीतये
गृणानोहव्यदातये ॥ निहोतासत्सिबर्हिषि ॥ ३ ॥ शन्नोदेवीरभिष्टयआपोभवन्तुपी
तये ॥ शँयोरभिस्रवन्तुनः ॥४॥ इत्यध्ययनंसमाप्तम् ॥ अंतपङ्क्तिकोक्ताऋषयस्तृप्यं
तामितिपाठः ॥ अत्रस्थले क्वचित्पुस्तके ऋषिविसर्जनं कृत्वा पश्चाच्छ्राद्धं कुर्वंति॥
ततःविरताःस्मइति सकृदुच्चैर्ब्रूयात् ॥ नमस्कारः ॥ ततःतदेतदृचाभ्युक्तंनमृषाश्रांतं
यजवंतिदेवाइतिनहैनैवंविदुषःकिंचनमृषाश्रांतंभवतितथोहास्यैतत्सर्वंदेवाअवंति ॥
॥१॥ इतिनमस्कारः ॥ अथऋषिश्राद्धमुपक्रम्यते ॥ तत्रायंप्रकारः ॥ कृतप्राणायामो
देशकालौ संकीर्त्य उत्सर्गाङ्गभूतम् ऋषिश्राद्धमहङ्करिष्ये ॥ ॐइदंविष्णुरितिदिग्ब ६२
न्धः ॥ ऋषिश्राद्धोपहाराःशुचयो भवन्त्वित्युपहारप्रोक्षणम् ॥ देशकालपत्रद्रव्यश्रा

द्धसम्पदस्तु ॥ गोतमादिसप्तऋषीणामिदमासनं यथायथाविभागं वःस्वाहा॥गोत
मादयःसप्तऋषयो यथादत्तं गंधाद्यर्चनं यथाविभागंवःस्वाहा ॥ गन्धादिदानम्॥ऋ
षिश्राध्दसांगतासिद्ध्यर्थं सप्तसंख्याकान्ब्राह्मणान् यथासंपन्नान्नेन तर्पयिष्ये ॥ तेन
गोतमादयःसप्तऋषयःप्रीयन्तां॥ ऋषिश्राध्दसांगतासिद्ध्यर्थं हिरण्यनिष्क्रयीभूतां
दक्षिणां मनसोद्दिष्टामाचार्यायसम्प्रददे ॥ आचार्यःकोदादितिकामस्तुतिंपठेत् ॥ ॐ
कोदात्कस्मांअदात्कामोदात्कामायांदात् ॥ कामोंदाताकामं÷प्रतिगृहीताकामैंतत्ते ॥
॥१॥ उपविष्टेषु ब्राह्मणेषूदकादिदानं ॥ तद्यथा ॐशिवाआपःसन्तु ॐसौमनस्यमस्तु
ॐअक्षतञ्चारिष्टंचास्तु ॥ अघोराऋषयःसन्तु ॥ सर्वत्र सन्त्विति विप्राःप्रतिवचनं द
द्युः ॥ उत्सर्गकर्मणोन्यूनातिरिक्तदोषपरिहारार्थं नानागोत्रेभ्यो नानाशर्मभ्यो विप्रे

भ्यो भूयसीं दक्षिणां संप्रददे ॥ अद्येत्यादिगुणविशिष्टे काले देशे च छन्दसामुत्सर्गा
ङ्गभूतमृषिश्राद्धं परिपूर्णमस्तु॥अस्तु परिपूर्णमिति विप्राः प्रतिवचनं दद्युः॥ततःसह
नोस्तुसहनोवतु सहनइदंवीर्यंवदस्तु ब्रह्म ॥ इन्द्रस्तद्वेदयेनयथानविद्विषामहइति ॥
उभाकवीत्यस्यप्रजापतिर्ऋषिः अश्विनौदेवतेजपेविनियोगः ॥ उभाकवीयुवायोनो
घर्मःपरापतत् ॥ परिसख्यास्यघर्म्मिणोव्विसख्यानिविसृजामहइतिचसर्वेजपेयुः ॥
विरताःस्मोति प्रब्रूयुः ॥ ततऋषीन्विसर्जयेत् ॥तत्र रेणुकारिका॥ततो विसर्जनंकुर्युरु
त्तिष्ठ ब्रह्मणस्पत इति ॥ उत्तिष्ठेति घोरःकण्वऋषिर्बृहतीछन्दः॥ब्रह्मणस्पतिर्देवता॥
सप्तऋषिविसर्जनेविनियोगः ॥ ॐउत्तिष्ठब्रह्मणस्पतेदेवयन्तंस्त्वेमहे ॥ उपप्रयंन्तुम
रुतः÷सुदानवऽइन्द्रंप्राशूर्भवासचा ॥१॥ ततःसमाचारात्समुद्रंगच्छेति सप्तर्षीन् जला

शयेत्प्लावयेत् ॥ ॐ समुद्रङ्गच्छस्वाहान्तरिक्षङ्गच्छस्वाहा देवꣳसवितारङ्गच्छस्वाहा
मित्रावरुणौगच्छस्वाहाहोरात्रेगच्छस्वाहाच्छन्दाꣳसिगच्छस्वाहाद्यावापृथिवीगं
च्छस्वाहायज्ञङ्गच्छस्वाहासोमङ्गच्छस्वाहादिव्यन्नभोगच्छस्वाहाग्निंवैश्वानरङ्गच्छ
स्वाहामनोमेहार्द्दियच्छादिवन्तेधूमोगच्छतुस्वज्ज्योतिः पृथिवीम्भस्मनापृणस्वाहा
स्वस्वप्रवरान्विसर्जयेत् ॥ अनेनाध्यायोत्सर्गाङ्गत्वेन कृतेन ऋषिपूजनतर्पणादिकर्म
णा श्रीभगवान्वेदपुरुषः प्रीयतां न मम ॥ एवमुत्सर्गं विधाय त्रिरात्रं गुरुगृहे सर्वे
शिष्यानिवसेयुः ॥ तत्र सूत्रं ॥ त्रिरात्रꣳसहोष्यविप्रातिष्ठेरन्निति ॥ सूत्रार्थः ॥ ततःसर्वे
गुरुगृहंत्रिरात्रमुषित्वास्वगृहं गच्छेयुः ॥ अन्यच्च ० त्रिरात्रं नाधीयीरँल्लोमनखानामानि
कृंतनञ्च। सूत्रार्थः ॥ उत्सर्गोत्तरंत्रिरात्रमध्ययनंनकुर्युः ॥ ततःनखलोम्नांनिकृन्तनञ्च ॥

एकेप्रागुत्सर्गात्॥एवंप्रकारेणेदमुत्सर्गाख्यं कर्म प्रतिवर्षमनुष्ठेयंनित्यत्वात्॥ तथाच कात्यायनः ॥ प्रत्यब्दं यदुपाकर्म सोत्सर्गं विधिवद्द्विजैः ॥ क्रियतेछन्दसां तेन पुनराप्यायनं भवेत् ॥ १ ॥ अस्थानोच्छ्वासविच्छेदघोषणाध्यापनादिकं ॥ प्रामादिकं श्रुतं यत्स्याद्यातयामत्वकारितत् ॥ २ ॥ अयातयामैश्छन्दोभिर्यत् कर्म क्रियतेद्विजैः ॥ क्रीडमानैरपि सदा तत्तेषां सिद्धिकारकामिति ॥ ३ ॥ उत्सर्गोत्तरं पुनरुपाकरणं यावच्छुक्लकृष्णव्यवस्थया मन्त्रब्राह्मणयोरध्यनमङ्गानां च ॥ तदुक्तंमिताक्षरायां ॥ यथाशास्त्रन्तु कृत्वैवमुत्सर्गं छन्दसां बहिः ॥ विरमेत्पक्षिणी रात्रिं यद्वाप्येकमहर्निशामिति ॥ अत उर्ध्वंतु छन्दांसि शुक्लेषु नियतः पठेत् ॥ वेदांगानि तु सर्वाणि कृष्णपक्षेषुसम्पठेदिति ॥ तत्र शुक्लेषु छन्दांसि कृष्णपक्षेष्वङ्गानीति विवेकः ॥ समूलत्वादयमेवपक्षः श्रेयस्करः ॥ वनस्थोपीदंकुर्वीत ॥ तदुक्तं प्रयोगपारि

जाते ॥ उपाकर्मोत्सर्जनञ्च वनस्थानामपीष्यते ॥ धारणाध्यापनांगत्वाद्गृहिणांब्रह्म
चारिणामिति ॥ उत्सर्गाकरणे दोषः श्रूयते ॥ उत्सर्जनञ्च वेदानामुपाकर्म तथैव
च ॥ अकृत्वा वेदजाप्येन फलमाप्नोति मानवः ॥ १ ॥ सूत्रकारिकयोर्भाव्यं विलो
क्यपद्धतिःकृता ॥ कर्मठानां प्रबोधाय कान्हदेवद्विजन्मना ॥ २ ॥ खनेत्रवसुभूवर्षे
माधवे जान्हवीतिथौ ॥ त्रैविद्यमोढसंज्ञेन काशीपुरनिवासिना ॥ ३ ॥ कान्हदेवा
त्मजेनैषा कृष्णदेवेन धीमता ॥ कान्हदेवकृतिः साध्वी शोधिता विदुषांमुदे ॥ ४ ॥
॥ इतिऋषिपूजनं समाप्तम् ॥
॥श्रीरस्तु॥अथातोऽध्यायोपाकर्म॥अध्ययनमध्यायः॥तस्योपाकर्मअंगीकारः॥इतिसू
त्रशेषः॥एतच्च कृतावसथ्यस्याध्यापनप्रवृत्तस्य भवति॥अपरे तु अध्यापनप्रवृत्तस्य
निरग्नेरपिलौकिकाग्नौ भवतीत्याहुः॥अनौपासनिकस्योपाध्यायस्यायमेव विशेषोलौ

किकाग्नाविति गर्गपद्धतौ॥हरिहरभाष्येऽपि ॥छन्दोगपरिशिष्टे कात्यायनः॥न स्वेग्ना वन्यहोमःस्यान्मुक्त्वैकां समिदाहुतिम् ॥ स्वगर्भसंस्क्रियार्थांश्च यावन्नासौ प्रजा यते ॥ इति ॥ तेनावसथ्याग्नावुपाकर्म भवतीति गम्यते ॥ तेनाध्यापयतोऽपि निरग्नेः साग्नेरनध्यापयतो नाधिकारः ॥ यत्तु लोके ब्रह्मचारिणं पुरस्कृत्य उपा कर्म प्रवर्त्तते लौकिकाग्नौ तस्याचारं विहायमूलं दृश्यते ॥ अत्र पूर्वजानां शि ष्टाचारमङ्गीकृत्यकर्तव्यम् ॥ अस्य लोपो न कर्तव्यः ॥ अथातोऽध्यायोपाकर्म प्रयोगः ॥ पादौ प्रक्षाल्य द्विराचमनम् ॥ आवसथ्याग्नेः पश्चात्पत्न्याशिष्यैः सह प्रा ङ्मुख उपविश्य आवसथ्येखर्परमधिश्रित्य तत्रयवान् प्रक्षिप्यखर्परस्याधः प्रज्वा ल्ययवानां भर्जनंतेयवाधानाः ॥ आवसथ्याभावे पृष्टोदिविविधानसिद्धाग्नेः पश्चादि त्यादि ॥ तदभावेग्राम्याग्निस्थापनम्॥तद्यथा॥ अद्यतिथौ अध्यायोपाकर्मणि पञ्चभू

संस्कारपूर्वकमग्निस्थापनमहं करिष्ये॥ दर्भैः परिसमुह्य॥ गोमयोदकेनोपलिप्य॥ स्रुवेणोल्लिख्य अनामिकाङ्गुष्ठेनोद्धृत्य॥उदकेनाभ्युक्ष्य॥अग्निमुपसमाधाय॥अग्नेः पश्चात्पत्न्याशिष्यैः सह प्राङ्मुख उपविश्य अग्नौ खर्परमधिश्रित्य तत्र यवान् प्रक्षिप्य खर्परस्याधः प्रज्वाल्य यवानां भर्जनं ते यवा धानाः॥भर्जनानंतरं पृथक्करणं होत्रार्थं भक्षणार्थं च॥गुरुः प्राणायामत्रयं कालज्ञानञ्च कृत्वा श्रीपरमेश्वरप्रीत्यर्थं अध्यायोपाकर्माहं करिष्ये॥ वैकल्पिकपदार्थविधारणं कुर्तात्॥तत्र पौर्णमास्यामुपाकर्म॥ पूर्वेण ब्रह्मणो गमनम्॥ अग्नेरुत्तरतः पात्रासादनम्॥ द्वे पवित्रे ताम्रमयी आज्यस्थाली॥पालाश्यः समिधः॥ प्राञ्चावाघारौ॥ समिद्धतमे आज्यभागौ॥ तिलहोमः सावित्रीमंत्रेण॥पूर्णपात्रदक्षिणा॥त्रिरात्रं लोमनखानामनिकृन्तनम्॥एतान् वैकल्पिकपदार्थानहं करिष्ये॥ ऋषिच्छंदोदेवतास्मरणम्॥ इषेत्वेत्यादिकस्य खंब्रह्मान्तस्य माध्यंदिनीयस्य

वाजसनेयकस्य यजुर्वेदाम्नायस्य विवस्वानृषिः वायुर्देवता गायत्र्यादीनिसर्वाणि 
छंदांसि यजुरादीनि च अध्यायोपाकर्मणि विनियोगः ॥ अथ देवताभिध्यानम् ॥
तत्र ॥ प्रजापतिं॥इन्द्रम॥अग्निम्॥सोमं ॥ पृथिवीं ॥ अग्निं ॥ ब्रह्माणं ॥ छन्दाꣳसि ॥
अन्तरिक्षं॥वायुं ॥ब्रह्माणं॥छन्दाꣳसि ॥ दिवं ॥ सूर्यं ॥ ब्रह्माणं ॥ छन्दाꣳसि ॥ दि
शः॥चन्द्रमसं॥ब्रह्माणं॥छन्दाꣳसि॥प्रजापतिं ॥ देवान् ॥ ऋषीन् ॥ श्रध्दां ॥ मेधां ॥
सदसस्पतिं ॥ अनुमतिं ॥ एताःप्रधानदेवताआज्येन ॥ सदसस्पतिं धानाभिः सवि
तारंसपर्णसमिधा॥ व्यवहित्या च पुनः पुनः ॥ सवितारंतिलैः॥ अग्निं स्विष्टकृतंधाना
शेषेण ॥ अग्निं ॥ वायुं ॥ सूर्यं ॥ आग्निवरुणौ ॥ अग्नीवरुणौ ॥ अग्निं॥वरुणं॥सवितारं
॥विष्णुं॥विश्वान्देवान् ॥ मरुतःस्वर्कान् ॥ वरुणं ॥ प्रजापतिं ॥ एता अंगप्रधानार्था 
देवताः अस्मिन् कर्मण्यहं यक्ष्ये॥ दक्षिणतो ब्रह्मासनमास्तीर्य॥ देवदत्तशर्मन् अ-

स्मिन् कर्माणि त्वं ब्रह्मा भव ॥ भवामीति प्रतिवचनं इतिब्रह्मवरणं॥ब्रह्मातूष्णीं आस
नावलोकनं ॥ आसनान्तृणानिरसनञ्च कृत्वा उपविशेत् ॥ अग्नेरुत्तरतःप्रणीतार्थमास
नद्वयं निधाय प्रणीताचमसं वामहस्ते कृत्वा आत्माभिमुखं जलेनापूर्य प्रथमासने
निधाय चमसदण्डमालभ्य ब्रम्हाणमवलोक्य तेन संकेतादिनाऽनुज्ञातः ॥ प्रणीय ॥
उत्तरासनेनिदध्यात् तत उदगग्रैः प्रागग्रैः कुशैरग्निं परिस्तीर्य ॥ अर्थवदासाद्य॥अ
ग्नेरुत्तरतःप्राक्संस्थमुदकसंस्थं वा पात्रासादनम्॥पवित्रच्छेदनदर्भास्त्रयः॥पवित्रेद्वे॥
प्रोक्षणीपात्रं॥आज्यस्थाली॥संमार्गकुशास्त्रिप्रभृतयः॥उपयमनकुशाःसप्तप्रभृतयः ॥
समिधस्त्रिप्रभृतयः ॥ स्रुवः ॥ आज्यं ॥ धानाः॥पूर्णपात्रञ्च ॥ अथोपकल्पनीयानि ॥
प्रतिशिष्यं नव नव समिध आर्द्राः सपत्राअवदुंबरस्य॥दधिभक्षार्थं॥लौकिकाधानाः
बाहुमात्रमौदुंबरकाष्ठन्तिलस्थापनस्थाने सर्पफणाकारमाकर्षफलकं ॥ तिलाश्चेति ॥

पवित्रकरणं॥द्वयोरुपरि त्रीणिनिधाय द्विमूलेन द्वौ कुशौ प्रदक्षिणीकृत्य सर्वान्युगप
द्धत्वा अनामिकांगुष्ठाभ्यां च्छित्त्वा तानुत्तरतःक्षिपेत् ॥ प्रोक्षणीपात्रं प्रणीतोत्तरतो
निधाय॥ प्रोक्षणीपात्रेपात्रांतरेण प्रणीताद्भिस्तासां प्रोक्षणम्॥सपवित्रहस्तेनोत्तानेन
पात्रप्रोक्षणं ॥ आज्यस्थाल्याःप्रोक्षणं ॥ संमार्गकुशानां प्रोक्षणं ॥ उपयमनकुशानां
प्रोक्षणं ॥ समिधां प्रोक्षणं॥स्रुवस्यप्रोक्षणं आज्यस्य प्रोक्षणं ॥ धानानां प्रोक्षणं॥पूर्णपा
त्रस्य प्रोक्षणं ॥ प्रणीताग्न्योर्मध्येऽसञ्चरे प्रोक्षणीर्निधाय ॥ कुशोपग्रहेण आज्यस्था
ल्यामाज्यनिर्वापः॥आज्याधिश्रयणं॥ततो ज्वलदुल्मुकेन पर्यग्निकरणं॥ इतरथावृ
त्तिः॥उदकंस्पृशेत्॥अर्धश्रितेस्रुवंप्रतप्य ॥ संमार्गकुशैःसमृज्य ॥ अग्रैर्मूलादारभ्या
ग्रपर्यन्तं॥ मूलैरग्रादारभ्य मूलपर्यन्तं सम्मृज्य॥प्रणीतोदकेनाभ्युक्ष्य॥पुनः प्रतप्य॥
अमृत्केबर्हिरादीनि दक्षिणतो निदध्यात॥ आज्यमुद्वास्य ॥ उत्तरतोनिधाय ॥ त

तोग्नेः पश्चिमतो निदध्यात् ॥ पवित्राभ्यामाज्यमुत्पूय ॥ प्रोक्षणीश्च पूर्ववदुत्पूय॥आ
ज्यमवेक्ष्य॥अपद्रव्यनिरसनं॥उपयमन॥न् कुशानादाय ॥ तिष्ठन् सामिधाभ्याधाय
प्रोक्षण्युदकशेषेण सपवित्रेण हस्तेनेशानमारभ्येशानपर्यन्तं प्रदक्षिणमाग्निं पर्युक्ष्य ॥
इतरथावृत्तिः॥पवित्रयोःप्रणीतासु निधानं॥सोपग्रहं सव्यहस्तमुत्तानं हृदि निधाय
दक्षिणजानुनिपातः॥ ब्रम्हणोन्वारम्भः दक्षिणहस्तेनस्रुवेण होमः ॥ मनसा ॐप्रजा
पतये स्वाहा॥इदं प्रजापतये न मम ॥ त्यागान्ते द्रव्यप्रक्षेपः॥प्रोक्षणीपात्रे संस्रवधा
रणं॥ ॐइन्द्रायस्वाहा ॥इदं०॥ ॐअग्नयेस्वाहा ॥इदं०॥ ॐसोमायस्वाहा ॥इदं०॥
न ब्रह्मान्वारंभः॥ऋग्वेदे॥ॐपृथिव्यैस्वाहा॥इदंपृ०॥ ॐअग्नयेस्वाहा ॥ इदं० ॥ ॐ
ब्रह्मणेस्वाहा॥इदं०॥ॐछन्दोभ्यःस्वाहा॥ इदं० ॥ यजुर्वेदे ॥ ॐअन्तारिक्षायस्वाहा ॥
इदं०॥वायवेस्वाहा ॥इदं०॥ॐब्रह्मणेस्वाहा ॥ इदं० ॥ ॐछन्दोभ्यःस्वाहा ॥ इदं० ॥

यजुः सामवेदे॥ ॐ दिवे स्वाहा ॥ इदं० ॥ ॐ सूर्याय० ॥ इदं० ॥ ॐ ब्रह्मणे० ॥ इदं० ॥ ॐ छ श्रा.प्र.
न्दोभ्यः॥ इदं०॥ अथर्ववेदे ॥ ॐ दिग्भ्यः० ॥ इदं० ॥ ॐ चन्द्रमसे० ॥ इदं० ॥ ॐ
६८ ब्रह्मणे०॥ इदं०॥ ॐ छन्दोभ्यः०॥ इदं०॥ ॐ प्रजापतये०॥ इदं०॥ ॐ देवेभ्यः०॥ इदं० ॥
ॐ ऋषिभ्यः०॥ इदं०॥ ॐ श्रध्दायै०॥ इदं०॥ ॐ मेधायै०॥ इदं०॥ ॐ सदसस्पतये० ॥
इदं०॥ ॐ अनुमतये०॥ इदं०॥ एताः सप्तविंशत्याहुतय आज्येन ॥ ततः प्रोक्षितधाना
भिघारणं ॥ स्रुवेण धाना अवदाय॥ ॐ सदसस्पतिमद्भुतमित्यनेन मन्त्रेण जुहुयात्॥
ॐ सदसस्पतिमद्भुतंप्रियमिन्द्रस्य काम्यम् ॥ सनिंमेधामयासिषᳫं स्वाहा ॥ इदं सद
सस्पतये० ॥ सदसस्पतयेवाइमं मन्त्रं गुरुणापठ्यमानं शिष्या अपि सहानुपठेयुः॥ तत ६८
उदुंबरसमित्त्रितयमभिघार्यहस्ते गृहीत्वा उत्थाय प्राङ्मुखास्तिष्ठन्तः ॥ तत्संवितु० स्वा
हा ॥ इदमग्नये नमम ॥ अग्निःसविता यद्वा सवित्रे इत्युच्चार्य एकांसामिधमादध्युः ॥

एवं मन्त्रेण द्वितियांतथा तृतीयां॥ततःसर्वे उपविशेयुः॥ आचार्यःपुनःस्रुवेणधाना अवदाय॥द्वितीयां धानाहुतिं पूर्ववत्॥इदं०॥ततस्तिस्रोऽपराःसमिधोघृतेनाभ्यज्य॥ उत्थायप्रांमुखास्तिष्ठन्तः॥ तत्सवितु०स्वाहा॥ इत्युच्चार्य एकां समिधमभ्यादध्युः॥ एवंद्वितीयां तथा तृतीयां॥पुनराचार्यो धानाहुतिं जुहुयात्॥इदंसदस० मन्त्रानुप ठनं शिष्याणामपि॥ समित्त्रयं पूर्ववज्जुहुयात॥ ब्रह्मचारीतु शिष्योऽहरहरग्निका र्यंक्रमेण समिदाधानंकुर्यात्॥न सावित्र्या॥नवंचेत्पूर्वं तत्पित्रा नांदीश्राद्धंतं कर्त्तव्यं॥ अन्यत्सर्वं समानं॥ततो या उपकल्पिता धानाःकिंचिल्लौकिकरीत्या प्रोक्ष्य दधि च प्रोक्ष्य॥तिस्रस्तिस्रो गृहीत्वा॥ॐशन्नोभवत्विति मन्त्रेण दन्तैरखादन्तः॥शन्नोभ वन्तु॰वाजिनोहवेषुदेवतांता॥मितद्रवःस्वर्काः॰॥ जम्भयंतोहिंवृकःरक्षांःसिसनेम्यस्म द्युयवन्नमीवाः॥प्राश्नीयुः॥द्विराचमनं॥ॐदधिक्राव्णो०॥इति मन्त्रेण दधिभक्षेयुः॥

द्विराचमनं ॥ तत आचार्यो यावन्तं शिष्यगणं आत्मन इच्छेत्तावतस्तिलान् गण
यित्वा आकर्षफलकेनावदायशुक्रज्योतिरित्यनुवाकेन सावित्र्या वा जुहुयात् ॥ ॐ
तत्सवितुर्वरेण्यं॰ दयात् स्वाहा ॥ इदं सवित्रे॰ ॥ अथ ब्रह्मान्वारंभः॥संस्रवप्रक्षेपः ॥
ततोधानाभ्यः स्विष्टकृत् ॥ ॐअग्नये स्विष्टकृते स्वाहा ॥ इदमग्नये स्विष्टकृते॥ भूराद्या
नवाहुतीः आज्येन जुहुयात्॥सर्वत्र त्यागांते द्रव्यप्रक्षेपः॥ संस्रवप्राशनं आचमनं ॥
पवित्राभ्यां मार्जनं॥अग्नौ पवित्रप्रतिपत्तिः ॥ ब्रह्मणे पूर्णपात्रदानं ॥ तद्यथा ॥ ब्रह्मन्
अस्योपाकर्मणोगतया विहितं पूर्णपात्रं प्रतिगृह्यतां॥ॐद्यौस्त्वाददात्विति मन्त्रस्य
ब्रह्मणो जपः ॥ प्रणीताविमोकः ततोऽग्निमुत्तरेण कुशेषु प्रत्यङ्मुखोपविष्टेभ्यः शिष्ये
भ्यः प्राङ्मुख आचार्यः ॥ ॐकारमुक्त्वा त्रिश्चसावित्रमिनुब्रूयात् ॥ यथा ॐतत्सवितु॰
दयात् ॥इषेत्वादि ईशावास्यमन्तं ॥व्रतमुपैष्यन्नित्यादिसर्वं मन्त्रब्राम्हणयोरध्यायाया

दीन्प्रब्रूयात् ॥ बह्वृचां ऋषिमुखानि॥पर्वाणि छन्दोगानां ॥ सूक्तान्यथर्वणानां ॥ एवं सर्वंपठित्वा ॥ गुरुःशिष्याःश्चजपन्ति ॥ ॐसहनोस्तुसहनोवतुसहनऽइदंवीर्यवदस्तु ब्रम्ह॥इन्द्रस्तद्वेदयेनयथानविद्विषामहे॥ इतिमन्त्रंजपित्वा ॥ त्रिरात्रमनध्ययनंलोमनखानामनिकृन्तनमवपनश्चकरिष्यामहे ॥इतिसर्वेषांसङ्कल्पः॥ प्रागुत्सर्गाद्वा नियमोलोमनखनिकृन्तनवर्जने ॥ उत्सर्गावधि लोमनखानामकृन्तनमहंकरिष्ये ॥ इतिछन्दसामुत्सर्गात्प्राङ्मन्त्रब्राम्हणयोरध्ययनम् ॥ इतिश्रीमद्यज्ञविशारदगङ्गाधरभट्टानुसारेणहरिहराद्यनुसारेणविरचिताध्यायोत्सर्गोपाकर्मप्रयोगःसमाप्तः ॥

॥ श्रीगणेशायनमः ॥ अथहेमाद्रीप्रयोगः ॥ सुमुखश्चैकदंतश्च कपिलो गजकर्णकः ॥ लम्बोदरश्च विकटो विघ्ननाशो विनायकः॥ १॥धूम्रकेतुर्गणाध्यक्षो भालचन्द्रो गजाननः॥द्वादशैतानि नामानि यःपठेच्छृणुयादपि॥ २॥विद्यारंभे विवाहेच प्रवेशे

निर्गमे तथा ॥ संग्रामे संकटे चैव विघ्नस्तस्य न जायते ॥ ३ ॥ शुक्लांबरधरं देवं शशिव
र्णंचतुर्भुजं ॥ प्रसन्नवदनं ध्यायेत्सर्वविघ्नोपशान्तये ॥ ४ ॥ अभीप्सितार्थसिद्ध्यर्थं पू
जितोयःसुरासुरैः ॥ सर्वविघ्नहरस्तस्मै गणाधिपतये नमः ॥ ५ ॥ वक्रतुण्डमहाकाय
सूर्यकोटिसमप्रभ ॥ अविघ्नं कुरु मे देव सर्वकार्येषु सर्वदा ॥ ६ ॥ वागीशाद्याःसुमनसः
सर्वार्थानामुपक्रमे ॥ यन्नत्या कृतकृत्याः स्युस्तं नमामि गजाननं ॥ ७ ॥ गणनाथं न
मस्कृत्य नमस्कृत्य पितामहं ॥ विष्णुं रुद्रं श्रियं देवीं वंदे भक्त्या सरस्वती ॥ ८ ॥
स्थानक्षेत्रं नमस्कृत्य दिननाथं निशाकरं ॥ धरणीगर्भसंभूतं शशिपुत्रं बृहस्पतिं ॥ ९ ॥
दैत्याचार्यं नमस्कृत्य सूर्यपुत्रं शनेश्चरं ॥ राहुं केतुं नमस्कृत्य यज्ञारम्भे विशेषतः ॥
॥ १० ॥ शक्रादिदेवताः सर्वान्तृषींश्चैव तपोधनान् ॥ गर्गंमुनिं नमस्कृत्य नारदं पर्वतं
तथा ॥ ११ ॥ वसिष्ठं मुनिशार्दूलं विश्वामित्रंच गोभिलं ॥ अगस्त्यंच ॥ पुलस्त्यंच द

क्षमित्रं पराशरं ॥ भरद्वाजं च माण्डव्यं याज्ञवल्क्यंचगालवं ॥ १२ ॥ अन्येविप्रास्त
पोयुक्ता वेदशास्त्रविचक्षणाः ॥ १३ ॥ तान् सर्वान् प्रणिपत्याहं शुभङ्कर्म्म समारभे ॥
लाभस्तेषां जयस्तेषां कुतस्तेषां पराजयः ॥ येषामिन्दीवरश्यामो हृदयस्थो जनार्द
नः ॥ १४ ॥ अग्रतः श्रीनृसिंहश्च पृष्ठतो देवकीसुतः ॥ रक्षतां पार्श्वयोर्देवौ भ्रातरौ राम
लक्ष्मणौ ॥ १५ ॥ ॐ स्वस्ति श्रीमुकुन्दसच्चिदानंदस्य ब्रह्मणोऽनिर्वाच्यमायाशक्तिवि
जृम्भिताावियोगात्कालकर्म्मस्वभावाविर्भूतमहत्तत्वोदिताहंकारतृतीयोद्भूतवेदादिप
ञ्चकेन्द्रियदेवतानिर्मितंडकटाहे चतुर्दशलोकात्मके लीलया तन्मध्यवर्तिभगवतः
श्रीनारायणस्य नाभिकमलोद्भूतसर्वलोकपितामहस्य ब्रह्मणः सृष्टिं कुर्वतस्तदुद्धरणा
य प्रजापतिप्रार्थितस्यसमस्तजगदुत्पत्तिस्थितिलयकारणस्य रक्षाशिक्षाविचक्षण
स्यप्रणतपारिजातस्य अच्युतानंतवीर्यस्य श्रीमद्भगवतो महापुरुषस्य श्रीमदादिना

रायणस्य अचिंत्यापरिमितशक्त्याध्येयमानस्य महाजन्मौघमध्ये परिभ्रममाणानां
मनेककोटिब्रह्मांनामेकतमे ऽव्यक्तमहदहंकारपृथिव्यप्तेजोवाय्वाकाशाद्याकरणैरा
वृतेआस्मिन्महति ब्रह्मांडखण्डयोमध्ये आधारशक्ति श्रीमदादिवाराहदंष्ट्राग्रविराजि
ते कूर्मानन्तवासुकितक्षककुलिककर्कोटकपद्ममहापद्मशंखाद्यष्टमहानागैः संध्रिय
माणे ऐरावतपुण्डरीकवामनकुमुदांजनपुष्पदंतसार्वभौमसुप्रतीकाष्टदिग्गजोपरि प्र
तिष्ठितस्य अतलवितलसुतलतलातलरसातलमहातलपाताललोकस्योपरि भागे भु
र्लोकभुवर्लोकस्वर्लोकमहर्लोकजनलोकतपोलोक सत्यलोकादिसप्तलोकस्याधोभागे
चक्रवालशैलमहावलयनगमध्यवर्तिनो महाकालमहाफणीराजशेषस्य सहस्रफणानां
मणिमंडलमण्डिते दिग्दन्तिशुण्डोत्तंभिते अमरावतीभोगावतीसिद्धवतीगान्धर्वव
तीकांच्यवन्त्यलकावतीयशोवतीतिपुण्यपुरीप्रतिष्ठिते इन्द्राग्नियमनिर्ऋतिवरुणवा

युकुबेरेशानेतिदिक्पालप्रतिष्ठिते लोकालोकाचलवलयिते लवणेक्षुसुरासर्पिर्दधिक्षारो
दकेतिसप्तार्णवपरिवृते जम्बुप्लक्षशाल्मलिकुशक्रौञ्चशाकपुष्कराख्यसप्तद्विपयुते इ
न्द्रकांस्यताम्रगभस्तिनागसौम्यगन्धर्वचारणभारतेतिनवखंडमण्डिते सुवर्णगिरी
कर्णिकोपेतमहासरोरुहाकारपञ्चाशत्कोटियोजनविस्तीर्णभूमण्डलेअयोध्यामथुरा
मायाकाशीकाच्यवन्तिकाद्वारावतीतिसप्तपुरीप्रतिष्ठितेशालग्रामशम्भलनन्दिग्रामे
तिग्रामत्रयविराजितेचम्पकारण्यबदरीकारण्यदण्डकारण्यार्बुदारण्यधर्मारण्यपद्मार
ण्यगृह्यारण्यजम्बुकारण्यादीनां मध्ये नैमिषारण्ये सुमेरुनिषदरजतकूटशुभ्रकू
टश्रीकूटहिमाचलानां हरिवर्षकिंपुरुषवर्षयोश्च दक्षिणेनवसहस्त्रयोजनविस्तीर्णे भर
तखण्डे मलयाचलसह्याचलविंध्याचलानामुत्तरेण स्वर्णप्रस्थचण्डप्रस्थशुक्तिकावर्त
करमणकमहारमणकपाञ्चजन्यसिंहललंकेति नवखण्डोपद्वीपमण्डिते दक्षिणावर्स्थि

यजुः तरेणुकाद्वयसूकरकाशीकाञ्चीकालिकाल्वटेश्वरकालञ्जरमहाकालेति नवोखरयु श्रा.प्र.
७२ तेद्वादशज्योतिर्लिङ्गगङ्गायमुनासरस्वतीनर्मदा।तापीपयोष्णीकावेरीत्यादिपुण्यनदी
विलसितेहिमवन्मेरुगोवर्द्धनक्रौञ्चश्रीशैलकचित्रकूटमहेमकूटमहेन्द्रमलयसह्यविंध्य
पारियात्राद्यनेकपर्वतसमन्विते मतङ्गमाल्यवात्किष्किन्धऋष्यशृङ्गेतिपञ्चमहानग
रयुते कोकन्ताहिरण्यशृङ्गकुब्जार्बुदमाणिकार्णिवटशालग्रामसूकरमथुरागयानिष्क्रम
णलोहार्गलपोतस्वामिप्रभासबदरीतिचतुर्दशगुह्यविलसिते जंबुद्वीपेकर्मभूमौस्वा
म्यवर्तिस्वर्गस्थितामराद्यासितावतारे गङ्गादिसरिद्भिः पाविते भारतेवर्षेनिखिलजन
पावनपरमभागवतोत्तमशौनकादिनिवासिते नैमिषारण्ये आर्यावर्तान्तर्गतब्रह्मावर्तै
कदेशे जनपदे कुरुक्षेत्रादिमध्यरेखायाः अमुकदिग्भागेगङ्गायाः अमुकतटे अमुक ७२
क्षेत्रान्तरवर्तिसोमसूर्यान्वयभूभृत्प्रातिष्ठिते श्रीमन्नारायणनाभिकमलोद्भूतसकलजग

त्स्रष्टुः परार्द्धद्वयजीविनो ब्रह्मणो द्वितीयपरार्द्धे पञ्चाशदधिकेवर्षे प्रथममासे प्रथमप
क्षे प्रथमादिवसे अन्होद्वितीये यामे तृतीयं मुहूर्तेरथन्तरादिद्वात्रिंशत्कल्पानां मध्ये अ
ष्टमे श्वेतवराहकल्पे स्वायंभुवादिमन्वन्तराणां मध्ये सप्तमे वैवस्वतमन्वंतरे सद्युगा
दिचतुर्युगानां मध्ये अष्टाविंशतिमे कलियुगे तत्प्रथमविभागे संवत्सराणांव्यतिक्रां
तानां धनुःसाहस्त्र्यांसप्तत्यधिकायांतदुपरिवर्तमाने श्रीमन्नृपविक्रमार्कसमयातीतसं
वदेकोनविंशशताधिकयथासंख्यागमे चान्द्रसावनसौरनक्षत्रादिभ्रमितप्रभवादिष
ष्टिसंवत्सराणांअमुकनाम्नि संवत्सरे उत्तरगोलावलंबिनि श्रीमार्तण्डमण्डले अमुक
ऋतौ अमुकमासे अमुकपक्षे अमुकतिथौ अमुकवासरे अमुकनक्षत्रे अमुकयोगे अ
मुककरणे अमुकचन्द्रे अमुकदेवगुरौ शेषेषु ग्रहेषु यथास्थानास्थितेषु सत्सु एवं ग्रह
गुणविशिष्टे देशे काले मम इह जन्मनि जन्मांतरे वा सञ्चितानां पापानां ब्रह्महननसु

रापानसुवर्णस्तेयगुरुतल्पगमनतत्संसर्गरूपमहापातकानां बुद्धिपूर्वकाणां मनोवाक्कायकृतानां बहुकालाभ्यस्तानां उपपातकानांच स्पृष्टास्पृष्टसंकलीकरणमलिनीकरणापात्रीकरणजातिभ्रंशकरणरसविक्रयकन्याविक्रयहयविक्रयगोविक्रयखरोष्ट्रविक्रयदास्यजादिपशुविक्रयव्रात्यब्राह्मणदुष्टब्राह्मणत्वानिरर्थकवृक्षच्छेदनऋणानपाकरणब्रह्मस्वापहरणदेवस्वापहरणराजस्वापहरणब्राह्मणनिन्दागुरुनिंदावेदनिन्दाशास्त्रनिंदाऽभक्ष्यभक्षणाऽभोज्यभोजनाचोष्यचोषणालेह्यलेहनास्पृश्यस्पर्शनाश्राव्यश्रवणाहिंस्यहिंसनावंद्यवंदनाचिन्त्यचिन्तनायाज्ययाजनापूज्यपूजनपूज्यपूजाव्यतिक्रमणमातृपितृतिरस्कारस्त्रीपुरुषप्रीतिभेदनपरस्त्रीगमनवैश्यस्त्रीगमनक्षत्रियस्त्रीगमनब्राह्मणस्त्रीगमनविधवागमनदासीगमनवेश्यागमनचाण्डालादिहीनजातिगमनपशुयोनिबीजपातकूटसाक्षित्वपैशून्यवादामिथ्यापवादम्लेच्छसंभाषणब्रह्मद्वेषक

रणस्वामिभेदनमित्रवंचनभार्यावंचनगर्भपातनरजस्वलागमनसकामस्त्रीस्तनस्पर्श
नपथितताम्बूलचर्वणहीनजातिसेवनानृतभाषणपरान्नभोजनासाक्षिभोजनगणान्नभो
जनभ्रूणहिंसापशुहिंसास्त्रीहिंसास्नानत्यागसंध्यात्यागपूजात्यागोपासनाग्नित्यागवै
श्वदेवत्यागात्मार्थपाककरणैकाकिमिष्टान्नभोजनबालकैःसहभोजनक्रमुकपात्रभोज
नपंक्तिभेदकरणात्मस्त्रीसहभोजनप्रकीर्णपातकानांएततक्षणपर्यन्तसञ्चितानांलघु
स्थूलसूक्ष्माणाञ्चनिरासार्थं सहस्रगोदानजन्यकुरुक्षेत्रादिसर्वतीर्थस्नानजन्यफल
प्राप्त्यर्थं समस्तपितॄणां आत्मनश्चविष्णवादिलोकप्राप्तये वा अधीतानामध्येष्यमा
णानामध्यायानांस्थापनक्रोशघोषदुर्वृत्तद्रुतमुच्चारितवर्णानां पूर्वसवर्णानामलोपल
म्बितद्रुतमुच्चारितवर्णानां स्पृष्टवर्णविघट्टनादिभिःप्रामादिकश्रुतीनां यज्जातं यातया
मत्वं तत्परिहारार्थंअक्षरहीनंमात्रास्वरहीनं अङ्कहीनमनुस्वारपदच्छेदकाण्डकाव्यं

जनविकरीषस्वरभाक्तिद्विभार्वहृस्वदीर्घप्लुतौरसकंठ्यतालुमूर्द्धन्यौष्ठनासिकानुनासिकाचिह्वामूलीयोदात्तानुदात्तस्वरितलक्षणजातिवर्णगोत्रप्रयत्नोच्चारणमाधुर्याक्षरव्यक्तिहीनंवेदाध्ययनंतज्जानितपातकनिरासार्थञ्च सर्वेषामाप्यायनार्थं बीजत्वार्थञ्च नवोपनीतानां ग्रहणाधिकारार्थंइतरेषामुत्सृष्टानां वेदानां पुनर्ग्रहणार्थंच यातयामत्वदोषपरिहारार्थंयथावद्यद्देवतोपासनया यथायथावत्फलप्राप्त्यर्थं देवब्राह्मणसवितृसूर्यनारायणसन्निधौ गङ्गाभागीरथ्यां प्रवाहाभिमुखेनाभिमात्रजले गणस्नानमहं करिष्ये ॥ छ ॥ ॥ इति हेमाद्युक्तमहासंकल्पः समाप्तः ॥ ॥ छ ॥

# जाहिरात.

| नाम. | | की.रु.आ. | ट.म.रु.आ. |
|---|---|---|---|
| २७६ नवग्रहविधानपद्धति .... .... .... | क | ०–५ | ०–१ |
| २७७ नवग्रहकाण्डी [ नित्यपूजाविधानपद्धाति ] | क | ०–२ | ०–॥ |
| २७८ नान्दीश्राद्ध .... .... .... .... | क | ०–२ | ०–॥ |
| २७९ नित्यकर्मपद्धाति .... .... .... | क | ०–३ | ०–॥ |
| २८० नारायणबाळि .... .... .... | क | ०–४ | ०–॥ |
| २८१ नित्यतंत्र भाषाटीका .... .... .... | श्री | ०–१२ | ०–१ |
| २८२ नित्यकर्मप्रयोगमाळा नित्यनियमके ५२ विषय | श्री | ०–६ | ०–१ |
| २८३ आह्निकसूत्रावली .... .... .... | ब | १–८ | ०–२ |
| २८४ पञ्चयज्ञ संस्कृत टीकासहित .... | (१) | ०–६ | ०–१ |
| २८५ पञ्चयज्ञ भाषाटीका .... .... | क | ०–४ | ०–॥ |
| २८६ पञ्चकशान्ति .... .... .... | क | ०–२ | ०–॥ |
| २८७ पार्वणश्राद्ध प्रयोग मूल संस्कृत .... | क | ०–२ | ०–॥ |
| २८८ पार्वणश्राद्ध पद्धति भाषाटीका .... | क | ०–४ | ०–॥ |
| २८९ प्रतिष्ठामयूख .... .... .... | क | ०–६ | ०–१ |
| २९० बृहत्कर्मकांडसमुच्चयमरणकालसेवार्षिकश्राद्ध | श्री | ०–६ | ०–१ |
| २९१ मंत्रमुक्तावली ( मंत्रसंग्रहः ) वैष्णव शिव शाक्त सर्वोपयोगी .... .... | हा | ०–३ | ०–॥। |
| २९२ प्रेतमञ्जरी भाषाटीका बडी .... .... | क | ०–१० | ०–२ |
| २९३ यज्ञोपवीतपद्धति मूल .... .... | क | ०–२ | ०–॥ |
| २९४ यज्ञोपवीत भा० टी० .... .... | क | ०–५ | ०–॥ |
| २९५ रुद्रविधानपद्धति .... .... .... | क | ०–५ | ०–१ |
| २९६ लम्बोदरीहवनपद्धति.... .... .... | क | ०–४ | ०–॥ |
| २९७ वरदगणेशपूजा .... .... .... | क | ०–१॥ | ०–॥ |
| २९८ वासिष्ठीहवनपद्धति .... .... .... | क | ०–४ | ०–॥ |

पुस्तकें मिलनेका ठिकाना—गंगाविष्णु श्रीकृष्णदास, 'लक्ष्मीवेंकटेश्वर' छापाखाना, कल्याण–मुंबई.

